योऽनूचानः स नो महान्।
केन्द्रीयसंस्कृतविश्वविद्यालयः

देवप्रयागस्थ-श्रीरघुनाथकीर्तिपरिसरस्य त्रैमासिकी वार्तापत्रिका

# रघुनाथवार्तावली

## योगविशेषाङ्कः

अष्टमवर्षम्(अङ्काः 22,23,24) (अक्टूबर 2021 - जून 2022)



नानाविषयसम्बद्धाः नानारसपरिप्लुताः।
परिसरीयवार्तास्ताः वार्तावल्यां प्रकाशिताः।।
रघुनाथवार्तावली कृपया श्रीरघुनाथस्य प्रसरेत्।
दिशि दिशि प्रापयेदथ वार्ताः परिसरस्याभिनवाः।।

प्रकाशनवर्षम् 2022



सम्पादकः
डॉ. अनिलकुमारः

# सम्पादकमण्डलम्

प्रो.विजयपाल शास्त्री
डॉ.सच्चिदानन्दस्नेही
श्रीपंकजकोटियालः



प्रधान-सम्पादकः
प्रो.एम.चन्द्रशेखरः

## श्रीनवीनकुमारः

लिपिचित्रसंयोजनम्


प्रकाशकः
केन्द्रीय-संस्कृत-विश्वविद्यालयः
श्रीरघुनाथकीर्तिपरिसरः
देवप्रयागः, पौडी-गढवालः, उत्तराखण्डः - 249 301
(दूरभाषः - 01378—266028)
Email : srkcampus@gmail.com
Website : http//csu-devprayag.edu.in/

https://www.facebook.com/csusrkcd

https://www.youtube.com/channel/UCjd-WndrwhRtckven8yBeVg

देवप्रयागस्थ-श्रीरघुनाथकीर्तिपरिसरस्य त्रैमासिकी वार्तावली
Website: http//csu-devprayag.edu.in/

रघुनाथवार्तावली-समबद्धमभिप्रायम्, प्रकाशनयोग्याः कार्यक्रमवार्ताः च अधोलिखित—ईमेल्-सङ्केतेन प्रेषयन्तु - srkvarta@gmail.com


# रघुनाथवार्तावली

## योगविशेषाङ्कः

# पुरोवाक्

**।।रामो राजमणिः सदा विजयते।।**

मर्यादापुरुषोत्तमस्य भगवतो श्रीरघुनाथस्य परमकृपया देवप्रयागस्य श्रीरघुनाथकीर्तिपरिसरस्य रघुनाथवार्तावली इत्यन्वर्थाभिधायिनी त्रैमासिकी पत्रिका सन्दर्भेऽस्मिन् योगविशेषाङ्कत्वेन अङ्कत्रयोपेता (22,23,24) आहोस्वित् अक्टूबर 2021 तः जून 2022 यावत् नवमासानां नव-नवाचिता इयं प्राकाश्यतां गच्छति इति महते मोदाय कल्पते।

पत्रिकायामस्यां परिसरीयशैक्षिक-सांस्कृतिक-क्रीडासम्बद्धानां च गतिविधीनां पूर्णं विवरणं सचित्रं प्रपञ्चितम्। अनेन इदं स्पष्टं प्रतीयते यत् समेऽपि विभागाध्यक्षाः प्राध्यापकाः, अध्यापकाः, छात्राः सम्मिल्य परिसरस्यास्य इतोऽधिकविकासाय त्रिकरणशुद्धया प्रयत्नशीलाश्च सन्तीति।

एधमानोऽयं परिसरः, विविधैः शैक्षिक-साहित्यिक-सांस्कृतिक-प्राशासनिक-गतिविधिभिः प्रगतिपथे सर्वदाऽग्रे सरेदिति प्रार्थये रघुकुलशिरोमणिम्।

परिसरेण नैकेषु गतिविधिषु सार्थकप्रयासेन कार्यक्रमान् सफलीकृतवद्भयः सर्वेभ्यः परिसरीयसदस्येभ्यः बन्धुजनेभ्यः अवसरेऽस्मिन् साधुवादान् वितीर्य विरमत्ययं जनः।

**प्रो.एम.चन्द्रशेखरः**
**निदेशकः**

# सम्पादकीयम्

रघुनाथस्य वार्तेयं प्रकाशिता हि योगतः।
योगविशेषयुतश्चायमङ्को भूषितो महान्।।1।।
पुरातनेन युक्तोऽपि नूतनं यत्र राजते।
ईश्वरस्य प्रभावेण सर्वं सर्वत्र शोभते।।2।।
परिसरस्य या शोभा पुरा जाता मनोहरा।
साऽधुना वै समायाता विशिष्टे हि समागमे।।3।।
निदेशकस्य पूर्वस्य परिचयः सुशोभते।
सर्वैश्च पालितं नूनं गान्धिजन्म विशेषतः।।4।।
स्वच्छतायाश्च निर्देशः सर्वत्र पाल्यते सदा।
सूचना राजते यस्याः व्यवहारेण भूषिता।।5।।
कार्यशालाविभागस्य न्यायस्य शोभिता यथा।
वैदिकानां प्रभावोऽपि विस्तरेणेह योजितः।।6।।
परिसरेण सार्धं हि वेब्स इत्यस्य सूचना।
प्रकाशिता प्रयत्नेन विद्वद्भिश्च सुशोभिता।।7।।
सतर्कतादिनञ्चेदं संस्थया परिपालितम्।
रामायणस्य पाठोऽपि छात्रैश्च सुकृतो महान्।।8।।
वास्तुशास्त्रस्य सङ्गोष्ठी ज्योतिषस्य विराजते।
परीक्षापि च छात्राणां सञ्जाता नो यथाक्रमम्।।9।।
राज्यस्तरे च कारिताः शास्त्राणां प्रतियोगिताः।
परिसरे समायाताः विद्यानुरागिणस्तथा।।10।।
शोधोपवेशनं नित्यं छात्राणामत्र शोभते।
शारदापूजनं सर्वैः छात्रैश्च सुकृतं शुभम्।।11।।
साहित्यस्य विभागेन कृतं चात्रोपवेशनम्।
सार्धं कुलपतिवर्यैः शिक्षकाणां मनोहरम्।।12।।
केचनात्र समायाताः याताश्चेतः पुरातनाः।
प्राध्यापकाः विशिष्टा हि ज्ञानिनस्तत्त्वदर्शिनः।।13।।
सूर्यस्य हि नमस्कारो नो ज्ञानबलदो महान्।
तस्मादाचरितः सर्वैः छात्रैः प्राध्यापकैस्तथा।।14।।
पालितो दिवसो नूनं क्रीडायाश्च विशेषतः।
मतदातादिनं पुण्यं परिसरे योजितं पुनः।।15।।
गणतन्त्रदिनं सम्यक् सर्वैश्च परिपालितम्।
मोदिनो भाषणं नूनं श्रावितं च शुभङ्करम्।।16।।
नूतने भवने जातः प्रवेशश्च शनैः शनैः।
सम्भाषणं विशिष्टं च सञ्जातं सुमनोहरम्।।17।।
एकवर्षं गतं तस्मात्पालितश्च महोत्सवः।
उत्कर्षोल्लसितैः सर्वैः देहल्यां वै शुभप्रदः।।18।।
पौरोहित्यस्य नो जातं प्रशिक्षणं शिवप्रदम्।
नवनिदेशकानां च यथाऽऽगमनं शुभम्।।19।।
चन्द्रवद् विद्यते यस्य कान्तिः स चन्द्रशेखरः।
परिसरोऽपि धन्यो हि राजते चन्द्रशेखरः।।20।।
योगेन वै कृतो यत्नो विश्वेऽस्मिन् परिपालितः।
मनोवाग्वपुभिर्नित्यं योगो भवति सौख्यदः।।21।।
कुलपतिः समायातो योगस्य दिवसे यदा।
तदा योगश्च सञ्जातः सर्वहितकरो महान्।।22।।
कुर्वन्तीह यदा छात्रा योगं च सौख्यदं शुभम्।
तदा यान्ति परां शान्तिं योगेन परिपालिताम्।।23।।
सम्प्रति पाल्यते सम्यक् च वार्षिकोत्सवो मुदा।
येन हि पूर्णतामेति कार्याणि नः शुभानि वः।।24।।
रघुनाथो हि नाथो मे स्मरामि तं पुनः पुनः।
यस्य कृपाकटाक्षेण विभाति भुवनत्रयम्।।25।।

डॉ.अनिलकुमारः



## परिसरस्य नवनिदेशका आचार्यविजयपालशास्त्रिणः

केन्द्रीयसंस्कृतविश्वविद्यालयस्य गरलीपरिसरात्स्थानान्तरिताः साहित्याचार्यः, वेदवेदान्तव्याकरणायुर्वेदादिषु शास्त्रेषु कृतभूरिपरिश्रमः प्रो.विजयपालशास्त्री संस्कृतशास्त्रपरम्परायाः महान् विद्वान् राजस्थानप्रदेशे लब्धजन्मानः, गुरुकुलपरम्परया कृताध्ययनः चास्ति।

विजयपालशास्त्रिमहाभागस्य पितुर्नाम शिवचन्दः। तस्य जन्म 30/12/1959 तमे राजस्थानप्रदेशस्य ढाणी भालोठ इति ग्रामे अभवत्। वर्तमाने महाभागः जयपुरस्थितस्य आनन्दविहारस्य गोपालपुरा बाई पास रोड इत्यत्र वसति। साम्प्रतं सः उत्तराखण्डप्रदेशस्य देवप्रयागस्थितस्य केन्द्रीयसंस्कृतविश्वविद्यालयस्य श्रीरघुनाथकीर्तिपरिसरे साहित्यविभागस्य विभागाध्यक्षपदमलङ्करोति।

शैक्षणिकयोग्यता – महाभागोऽयं 1974 ख्रीष्टाब्दे श्रीमद्दयानन्दार्ष-विद्यापीठतः व्याकरणादिविषये मध्यमापरीक्षायां प्रथमश्रेण्यां स्थानमलभत । 1978 ख्रीष्टाब्दे श्रीमद्दयानन्दार्ष-विद्यापीठतः शास्त्रीपरीक्षायां प्रथमश्रेणीं प्राप्तवान्। 1981 ख्रीष्टाब्दे गुरुकुलकांगडीविश्वविद्यालयात् संस्कृतसाहित्यविषये एम.ए. इति परीक्षायां प्रथमश्रेण्यां स्थानमलभत। 1983 ख्रीष्टाब्दे संस्कृतसाहित्ये दिल्लीविश्वविद्यालयतः एम.फिल् इति कृतवान्। 1985 तमे वर्षे म.द.वि.वि इत्यतः साहित्याचार्यपरीक्षायां स्वर्णपदकं प्राप्तवान्। जयपुरप्रदेशस्य राज.वि.वि इत्यतः 1993 तमे वर्षे नव्यव्याकरणाचार्यपरीक्षायां प्रथमश्रेण्यां स्थानं स प्राप्तवान्। 1998 तमे वर्षे पुराणेतिहासविषये पुराणेतिहासाचार्य इति उपाधिं लब्धवान्। 2002 ख्रीष्टाब्दे जयपुरस्थितस्य राज.संस्कृतवि.वि इत्यतः व्याकरणविषये प्राच्यव्याकरणाचार्य इति उपाधिं लब्धवान्। 2004 ख्रीष्टाब्दे राष्ट्रिय-संस्कृतसंस्थानात् सांख्ययोगविषये सांख्ययोगाचार्य इति उपाधिः तथा स्वर्णपदकं तेन प्राप्तम्। काशिकागत-लक्ष्यविशेषाणामर्थः प्रयोगश्च इति शीर्षकविषये तेन दिल्ली विश्वविद्यालयतः पी.एच.डी. इति उपाधिः प्राप्तः।

अध्यापनानुभवः – पूर्वं सः राजस्थानप्रदेशस्य वनस्थलीविद्यापीठे पाठयति स्म। ततो जयपुरप्रदेशस्य श्रीदादू-आचार्य-संस्कृतमहाविद्यालये स्नातकान् तथा स्नातकोत्तरान् छात्रान् पाठितवान्। लखनऊस्थिते राष्ट्रियसंस्कृतसंस्थाने शास्त्री-आचार्यकक्षे निरन्तरमध्यापितवान्। 11/07/2005 तमे वर्षे तस्य जयपुरप्रदेशस्थिते राष्ट्रियसंस्कृतसंस्थाने स्थानान्तरं जातम्, अपि च 26/05/2009 ख्रीष्टाब्दं यावत् तत्रैव तेनाध्यापितम्। तस्मात् परिसराद् आचार्यपदं लब्ध्वा सः 2009 ख्रीष्टाब्दे हिमाचलप्रदेशस्य राष्ट्रियसंस्कृतसंस्थानस्य वेदव्यासपरिसरे आगतः।

शोधानुभवः -2002 इत्यतः 2005 ख्रीष्टाब्दं यावत् सः केरलविश्वविद्यालये-कालीकटविश्वविद्यालय-श्रीशङ्कराचार्यविश्वविद्यालयानां हस्तलेखागारेषु शोधसामग्रीसङ्कलने निरतः आसीत् । 7/8/2002 इत्यतः 10/7/2005 दिनाङ्कं यावत् तेन राष्ट्रियसंस्कृतसंस्थानस्य लखनऊपरिसरे शोधविभागे अध्यक्षपदं निर्व्यूढः।

शोधलेखः – उच्चस्तरीयशोधपत्रिकायां विंशत्यधिकानि शोधपत्राणि प्रकाशितानि।

प्रकाशितानि पुस्तकानि – तस्य बहूनि पुस्तकानि प्रकाशितानि। तेषु पाणिनीयव्याकरण-शोधनिबन्धावली, काशिकागतविशिष्टोदाहरणानामर्थः प्रयोगश्च, संस्कृतसूक्तिसमुच्चयः व्याकरणखण्डः, अर्जुनरावणीयमिति महाकाव्यम्, लोकसंव्यवहारप्रवृत्तिः, वासुदेवविजयमित्यादीनि विशेषोल्लेखनीयानि।

विदेशयात्रा – 1999 तमे वर्षे तथा 2001 तमे वर्षे सः भारतीयसंस्कृतिविषये व्याख्यानं प्रदातुम् नीदरलैण्डदेशं गतवान्।

## श्रीरघुनाथकीर्तिपरिसरे गान्धिजयन्तीमुपलक्ष्य विशिष्टव्याख्यानं स्वच्छताकार्यक्रमश्च

भारतस्य स्वतन्त्रतायै नैके सुपुत्राः स्वप्राणान् त्यक्तवन्तः। येषु महात्मगान्धिनो नाम सर्वोपरि राराजते। तेषां जन्मदिवसमुपलक्ष्य सम्पूर्णभारते सर्वासु संस्थासु गान्धिजयन्ती इति राष्ट्रियपर्वणि बहवः कार्यक्रमाः हर्षोल्लासेन समायोज्यन्ते। केन्द्रीयसंस्कृतविश्वविद्यालयस्य श्रीरघुनाथकीर्तिपरिसरेऽपि अस्यायोजनं महतोल्लासेन समभवत्। अस्मिन् अवसरे आदौ विशिष्टव्याख्यानं “वर्तमान समय में गान्धिवाद की प्रासंगिकता”इति विषयमाश्रित्य जातम्। तदनन्तरं सर्वैः परिसरसदस्यैः स्वच्छताकार्यक्रमः समाचरितः। कार्यक्रमेऽस्मिन् परिसरस्य निदेशकाः साहित्यविभागाध्यक्षाश्च प्रो.विजयपालशास्त्रिमहोदयाः अध्यक्षपदमलङ्कृतवन्तः। सर्वे प्राध्यापकाः महात्मगान्धिनः अपि च भारतस्य द्वितीयप्रधानमन्त्रिणः श्रीलालबहादुरशास्त्रिणश्चरणयोः पुष्पाञ्जलिमर्पितवन्तः। कार्यक्रमे विशिष्टवक्तृरूपेण इतिहासविदः डा.अरविन्दसिंहगौरमहोदयाः समुपस्थिता आसन्, स्ववक्तव्ये तैः उक्तं यत् सत्यमेव तपो विद्यते ,अहिंसैव धर्मश्च। अतः अस्माभिः सत्यं वक्तव्यम् अहिंसायाः आचरणञ्च कर्त्तव्यम्। एवं वयं व्यवहरामश्चेत् पूजायाः कापि आवश्यकता नास्ति। साम्प्रतिकयुगे अनयोः समाजे महती आवश्यकता विद्यते। आभ्यामेव सत्याहिंसाभ्यां महात्मगान्धी विश्वस्य कृते अनुकरणीयः सञ्जातः। मुख्यवक्तृरूपेण डा.अनिलकुमारेण उक्तं यत् समाजे महिलानां दशा दयनीया वर्तते तासां समाजे तथैव आदरो भवेत् यथा सीतायाः। देवाः तत्रैव वसन्ति यत्र नारीणां सम्माननं भवति। यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवता इति यथा मनुना प्रतिपदितं तथैव नारीसमाजस्योत्थानमत्यावश्यकमस्ति। प्रो.विजयपालशास्त्रिणा उक्तं यत् शास्त्ररक्षणमस्माकं समेषां दायित्त्वं विद्यते भगवद्गीता महात्मगान्धिनः अनुकरणीयो ग्रन्थ आसीत्। तत्र मानवधर्मस्य पालनमेव सर्वोपरि धर्मः कथितः। गान्धिनो विचाराः अद्यापि तथैव प्रासङ्गिकाः सन्ति यथा स्वतन्त्रताकाले आसन्। अस्माभिस्तेषां मार्गस्यैवानुकरणं कर्त्तव्यम्। अस्य कार्यक्रमस्य संयोजकः डॉ.अवधेशबिजल्वाणः आसीत्। अस्मिन् अवसरे सर्वे प्राध्यापकाः समुपस्थिता आसन्। व्याख्यानान्तरं सर्वैः स्वच्छताकार्यकमः समाचरितः, तत्र परिसरस्य पार्श्ववर्तिषु क्षेत्रेषु स्वच्छतां विधाय सर्वे परिसरीयाः सदस्याः स्वयोगदानं कृतवन्तः।






## प्रवेशः आरब्धः

केन्द्रीयसंस्कृतविश्वविद्यालयेन अधुना प्रवेशप्रक्रिया आरब्धा। शास्त्री-आचार्यकक्षयोः प्रवेशपरीक्षा सीयूइटीमाध्यमेन भविष्यति। परं च प्राक्शास्त्रीकक्षायाः प्रवेशः परिसरद्वारा आयोजिताया परीक्षाया आधारेणैव भविष्यति। सम्प्रति परिसरतः प्रवेशसूचनेयं प्राक्शास्त्रीकक्षायाः कृते निर्गता विद्यते। ये अस्यां प्राक्शास्त्रीकक्षायां प्रवेष्टुकामाः सन्ति ते श्रीरघुनाथकीर्तिपरिसरस्य जालपुटे सूचनां द्रष्टुं शक्नुवन्ति।






## न्यायविभागेन समायोजिता अन्तर्जालीया कार्यशाला

भारतीयदार्शनिकानुसन्धानपरिषदः वित्तीयसाहाय्येनश्रीरघुनाथकीर्ति- परिसरस्य आन्तरिकगुणवत्ता-आश्वासनप्रकोष्ठेन नव्यन्यायभाषाप्रदीप इति ग्रन्थमधिकृत्य दशदिवसीया कार्यशाला समाचरिता। कार्यशालेयं नवम्बरमासस्य एकादशदिनाङ्कादारभ्य विंशतिदिनाङ्कपर्यन्तमायोजिता। कार्यशालाया उद्घाटनावसरे विशिष्टवक्तृरूपेण परिसरस्य पूर्वनिदेशकेन व्याकरणविभागाध्यक्षेण प्रो. बनमालीबिश्वालमहोदयेन न्यायशास्त्रस्यैतिह्यं प्रस्तूय न्यायशास्त्रस्य व्यवहारिकोपयोगिता प्रतिपादिता, नव्यन्यायभाषाप्रदीपग्रन्थस्य वैशिष्ट्यं च स्वरचितकाव्यमाध्यमेन तेन समुपस्थापितम्। मुख्यवक्तृरूपेण कविकुलगुरुकालिदाससंस्कृतविश्वविद्यालयस्य कुलपतिवर्येण प्रो.श्रीनिवासवरखेडीमहोदयेन नव्यन्यायभाषाया व्यावहारिकमुपयोगं प्रतिपाद्य परिष्कृतलक्षणानां निर्दुष्टत्वञ्च प्रस्तुतम्। अस्य शास्त्रस्यान्येभ्यश्शास्त्रेभ्यः किं वैशिष्ट्यं छात्राणां कृते कथञ्चास्य महत्त्वं विद्यते इति विस्तरेणोक्तम्। सारस्वतातिथिरूपेण पुणेविश्वविद्यालयस्य उच्चतरसंस्कृताध्ययनकेन्द्रस्य पूर्वनिदेशिकाः प्रो.उज्ज्वलाझामहोदयाश्चात्रोपस्थिता आसन्। ताः प्रमाणानां स्वरूपम्, ग्रन्थस्य वैशिष्ट्यञ्च प्रतिपादितवत्यः। अस्यां कार्यशालायाम् उत्तराखण्डसंस्कृतविश्वविद्यालयस्य कुलपतिचरः प्रो. पीयूषकान्तदीक्षितः, जवाहरलालनेहरुविश्वविद्यालयस्य संस्कृताध्ययनकेन्द्रस्याचार्यः प्रो. रामनाथझामहोदयः, काशीहिन्दूविश्वविद्यालयस्य भारतीयप्रौद्योगिकीकेन्द्रस्य मानवतावादीविभागस्याचार्यः डॉ. विश्वनाथधीतालः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयस्य न्यायविभागस्य आचार्यः प्रो. विष्णुपदमहापात्रः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य न्यायविभागस्याध्यक्षः प्रो. रामपूजनपाण्डेयः, नवदेहलीस्थस्य वेदवेदान्ताध्ययनम् एवं शोधसंस्थानमित्यस्य निदेशकः डॉ. धनञ्जयरावः, तिरुपतिराष्ट्रियसंस्कृतविश्वविद्यालयस्य आचार्यः डॉ. उदयनहेगडेमहाभागः, शश्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयस्य न्यायविभागाध्यक्षमहोदयः प्रो. महानन्दझा, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य न्यायविभागीयाचार्यः डॉ. कुञ्जविहारिद्विवेदिमहाभागः, केन्द्रीयसंस्कृतविश्वविद्यालयस्य अगरतलापरिसरस्य डॉ. गणेश्वरनाथझावर्यः, तिरुपतिराष्ट्रियसंस्कृतविश्वविद्यालयस्य डॉ.जीओपीकल्याणशास्त्रिमहोदयः, जगन्नाथसंस्कृतविश्वविद्यालयस्य डॉ.जयमाणिक्यशास्त्रिमहाभागः, केन्द्रीयसंस्कृतविश्वविद्यालयस्य श्रीरघुनाथकीर्तिपरिसरस्य न्यायविभागीयाध्यापकः श्रीजनार्दनसुवेदिमहाभागः एते सर्वे समुपस्थिताः आसन्। समापनसमारोहे कार्यक्रमसञ्चालनं परिसरस्य साहित्यविभागीयाचार्यः डॉ. अनिलकुमारः कृतवान्। समापनसमारोहे विशिष्टवक्तृत्वेन परिसरस्य व्याकरणविभागाध्यक्षः प्रो. बनमालीविश्वालमहाभागः आसीत्, तेन न्यायशास्त्रं सर्वविद्याप्रकाशकमस्तीति प्रतिपाद्य न्यायशास्त्रस्येतिहासः, न्यायाचार्याणां परिचयः, एव नव्यन्याभाषाप्रदीपग्रन्थस्य वौशिष्ट्यं स्वविरचितकाव्यमाध्यमेन प्रस्तुतम्। एवं मुख्यवक्तृरूपेण पुणे विश्वविद्यालयस्य उच्चतरसंस्कृताध्ययनकेन्द्रस्य पूर्वनिदेशकः प्रो.वशिष्टनारायणझामहाभागः उपस्थितः आसीत्, तेन न्यायशास्त्रीयलक्षणानां परिष्कारस्य सार्थकत्वं लौकिकोदाहरणपुरस्सरं प्रतिपादितम्। एवमेव सारस्वताथितिरूपेण भारतीयदार्शनिकानुसन्धानपरिषदः सदस्यसचिवः प्रो. सचिदानन्दमिश्रमहोदयः आसीत्, तेन नव्यन्यायभाषायाः महत्त्वं प्रत्यपादि एवमेव अध्यक्षीयोद्बोधनं परिसरस्य निदेशकः प्रो. विजयपालशास्त्रीमहाभागः विहितवान्। धन्यवादज्ञापनं कार्य्रशालायाः समन्वयकः न्यायविभागाध्यक्षः डॉ. सचिदानन्दस्नेहीमहोदयः कृतवान्।



## वेव्स केन्द्रीयसंस्कृतविश्वविद्यालय श्रीरघुनाथकीर्तिपरिसर इत्यनयोः संयुक्ततत्वावधाने समायोजिता अन्ताराष्ट्रिया वेदविषयिणी शोधसङ्गोष्ठी




केन्द्रीयसंस्कृतविश्वविद्यालस्य श्रीरघुनाथकीर्तिपरिसर-वेव्स (Wider Association for Vedic Studies) इत्यनयोः संयुक्ततत्वावधानेन अन्तर्जालीयमाध्यमेन भारतस्य 25तमं सम्मेलनं दिसम्बरमासस्य 10 दिनाङ्कात् 12 दिनाङ्कपर्यन्तमायोजितम्। अस्य सम्मेलनस्य मुख्यविषयः "वैदिक परिप्रेक्ष्य में स्वतन्त्रता एवं समानता की अवधारणा" आसीत्। वैदिकपरम्परायां विद्यते महत् चिन्तनं मानवस्य स्वतन्त्रतायै समानतायै च, तस्मात् तद्विषयकतत्त्वानां समाजस्य सम्मुखमानेतुं तद्विदां सम्मेलनमिदमायोजितम्। प्रो.शशितिवारिमहोदयाः वेव्ससंस्थाया अध्यक्षाः, अपि च श्रीरघुनाथकीर्तिपरिसरस्य व्याकरणविभागस्याचार्या विभागाध्यक्षाश्च प्रो.बनमालीबिश्वालमहोदयाः कार्यक्रमस्य प्रमुखा आसन्। अस्य कार्यक्रमस्योद्घाटनं श्रीरघुनाथकीर्तिपरिसरस्य वेदविभागाध्यक्षेण डा.शैलेन्द्रपसादउनियालमहोदयेन वैदिकमङ्गलाचरणेन विहितम्। तत्र प्रो.बनमालीबिश्वालमहोदयेन कार्यक्रमस्य प्रस्तावना प्रस्तुता। वर्तमानसमयेऽपि भारतीयसंविधाने विद्यते अनयोः स्वतन्त्रतासमानतयोः समावेशः, वैदिकपरम्परायां समानताया आधारो यः आसीत् तद्विषये च विस्तरेण चर्चां कुर्वन् वर्तमानसमये तयोरभावेन समाजे कीदृश्यः समस्याः समुत्पन्ना इत्यस्मिन् विषयेऽपि स्वविचारान् स प्रस्तुतवान्। मुख्यातिथिरूपेणात्र समागतश्चासीत् सावित्रीबाईफूलेविश्वविद्यालयात् संस्कृतविभागस्य पूर्वनिदेशकः प्रो.रविन्द्रअम्बादासमूलेमहोदयः, येनातीवगम्भीरतया वैदिकपम्परायां स्वतन्त्रतासमानतयोश्चर्चा कृता। तेन वैदिकमन्त्राधारेण "समानी वः आकूतिः समानी हृदयानि वः" एवम्भूता परम्परा कथं समाजे स्वविस्तारमगात्, सम्प्रत्यपि च तस्याः प्रभावः अस्माकं समाजे विद्यते इति विषयमवलम्ब्य विस्तरेण व्याख्यानं प्रदत्तम्। अस्मिन् सत्रे विविधविषयमवलम्ब्य विद्वद्भिः स्वकीयशोधपत्रद्वारा मौलिकचिन्तनमुपस्थापितम्। द्वितीये सत्रे वेव्ससंस्थया आदौ स्वकुलगीतिः प्रस्तुता, तदनन्तरं प्रो.भास्करभट्टाचार्य-श्रीशशिकेजरीवाल-डा.केयनरादएलस्ट-डा.एस.कल्याणरमण-डा.सी.आई.प्रभाकर-प्रो.बलरामसिंह-प्रो.शशितिवारीभिः

स्वव्याख्यानानि प्रस्तुतानि। तृतीये सत्रे प्रो.ललनप्रसाद-डॉ.धनञ्जयभञ्ज-डॉ.राजवर्मसिन्हानां सानिध्ये प्राचीनभारतीयविचारधारायां स्वतन्त्रता समानता च इति विषयमधिकृत्य 10 शोधपत्राणि प्रस्तुतानि। द्वितीयदिवसस्य प्रथमसत्रे कनिष्ठवर्गे प्रो.भास्करभट्टाचार्य-डा.अनिलकुमार-डा.धनञ्जयकुमारआचार्याणां संयोजने 17शोधवाचकैः स्वविचाराः समुपस्थापिताः। एवमेव षट्-सत्रेषु विभिन्नानां विदुषां समवाये वैदिकपरम्परायाः गम्भीरचिन्तनं तत्र जातम्। समापनसत्रे डा.शैलेन्द्रप्रसादउनियालमहोदयेन समेषामुपस्थितानां स्वागतं विहितम्, प्रो.शशितिवारिमहोदयया मुख्यभाषणम्, प्रो.प्रफुल्लकुमारमिश्रेण मुख्यातिथिभाषणम्, धन्यवादज्ञापनं च प्रो.रञ्जितबेहरामहोदयेन कृतम्। अस्य कार्यक्रमस्य संयोजकेषु डॉ.अपर्णाधीरखण्डेलवालः(सचिवः), श्रीनवीनडोबरियालः(तकनीकीसंयोजकः), श्रीपंकजकोटियालः(तकनीकीसंयोजकः), डॉ.अनिलकुमारः (शैक्षणिकसंयोजकः), डॉ.शैलेन्द्रप्रसादउनियालः (शैक्षणिकसंयोजकः) अपि मुख्या आसन्। अयं सम्पूर्णत्रिदिवसीयः कार्यक्रमः अन्तर्जालमाध्यमेन श्रीरघुनाथकीर्तिपरिसरेण फैसबुक-यूट्यूबमध्ये सजीवरूपेण प्रसारितः आसीत्।




## संस्कृतजगतः क्षतिः



भाति मे भारतमिति काव्येन संस्कृतजगति लब्धप्रतिष्ठाः, सुकवयः, छात्रवत्सलाः, भावगम्भीराः,पद्मश्रीपदेन सुशोभिताः, भारतजनताहमिति काव्यस्य लेखकाः सरस्वतीसुताः डॉ.रमाकान्तशुक्लमहोदयाः मईमासस्य 11 दिनाङ्के दिवङ्गताः। एवमेव वागीशशुक्लमहोदया अपि यशोऽवशेषाः सञ्जाताः।






## विश्वदर्शनदिवसस्यायोजनम्

18.11.2021 तः 30.11.2021 पर्यन्तं भारतीयदार्शनिकानुसन्धानपरिषदः वित्तीयसाह्यायेन केन्द्रीयसंस्कृतविश्वविद्यालयस्य श्रीरघुनाथकीर्तिपरिसरस्य आन्तरिकगुणवत्ता आश्वासनप्रकोष्ठेन च विश्वदर्शनदिवसमुपलक्ष्य अन्ताराष्ट्रिया व्याख्यानमाला समायोजिता। व्याख्यानमालाया उद्घाटनम् 18.11.21 दिनाङ्के मध्याह्ने 11.00 वादनतः 1.00 वादनं यावत्समायोजितम्, तत्र कार्यक्रमसञ्चालनम् आङ्गलभाषायाः प्राध्यापकाः डॉ. अवधेशबिजल्वाणवर्याः कृतवन्तः। उद्घाटनसमारोहे मुख्यातिथिरूपेण प्रो. एस. आर. भट्टमहोदयाः, अध्यक्षचराः भारतीयदार्शनिकानुसन्धानपरिषद् नवदेहलीतः आसन्, तेषां Revisiting indian modes philosophizing इत्यस्मिन् विषये व्याख्यानमभूत्। ततः परं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य जैनविभागस्य विभागाध्यक्षचराणां प्रो. फूलचन्द्रजैनमहाभागानां "स्वातन्त्र्योत्तर जैन दर्शन मे नई शोधप्रवृत्तियां" इत्यस्मिन् विषये व्याख्यानं जातम्। तदनन्तरं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्यैव जैनविभागस्य विभागाध्यक्षचराणां प्रो. धर्मचन्द्रजैनमहोदयानां "स्वातन्त्र्योत्तर भारतीयदर्शन मे जैन दर्शन का योगदान" इत्यस्मिन् विषये व्याख्यानं सम्पन्नम्। व्याख्यानमालायाः द्वितीयव्याख्याने नारायणमिथिलाविश्वविद्यालयस्य संस्कृतविभागस्य आचार्या एवं अध्यक्षा विकाससिंहमहाभागाः बौद्धदर्शनस्य सपरिचयं व्याख्यानं प्राददुः। तदनन्तरं जवाहरलालनेहरुविश्वविद्यालयस्य



संस्कृतप्राच्यविद्यासंस्थानस्य आचार्याणां चौडूरी उपेन्द्ररावमहाभागानां “प्रज्ञापरिमितादर्शनम्” इत्यस्मिन् विषये व्याख्यानं जातम्। व्याख्यानमालायाः तृतीयव्याख्यानं श्रीलालबाहादुरशास्त्रीसंस्कृतविद्यापीठस्य सांख्यविभागाध्यक्षाणां प्रो.मार्कण्डेयनाथतिवारीमहाभागानां “स्वातन्त्र्योत्तन्तर सांख्य एवं योगदर्शन” इत्यस्मिन् विषये व्याख्यानमभूत्। तदनन्तरम् आयुर्वेदविषयमाधारीकृत्य जवाहरलालनेहरुविश्वविद्यालयस्य संस्कृतप्राच्यविद्यासंस्थानस्य आचार्याणां गोपाललालमीनामहाभागानां “आयुर्वेदशास्त्र का दर्शनशास्त्रीयस्वरूप” इत्यस्मिन् विषये व्याख्यानं सम्पन्नम्। तत्र श्रीलालबाहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य पूर्वमीमांसाविभागाध्यक्षाणां श्रीमतां प्रो.ए.एम. अरावमुदामहाभागानां “पूर्वमीमांसा दर्शन के क्षेत्र मे नवीन शोधप्रवृत्तियां” इत्यस्मिन् विषये व्याख्यानं जातम्। तदनन्ततरं वेदान्तदर्शनमधिकृत्य जवाहरलालनेहरुविश्वविद्यालयस्य संस्कृतप्राच्यविद्यासंस्थानस्य प्रो. रामनाथझामहोदयानां “स्वातन्त्र्योत्तन्तर वेदान्त दर्शन” इत्यस्मिन् विषये व्याख्यानमभूत्। तत्र केन्द्रीयसंस्कृतविश्वविद्यालयस्य श्रीरघुनाथकीर्तिपरिसरस्य निदेशकचराणां व्याकरणविभागाध्यक्षाणां प्रो.बनमालीबिश्वालमहाभागानां “भारतीय एव पाश्चात्य दर्शन का तुलनात्मक स्वरूप” इत्यस्मिन् विषये व्याख्यानं सम्पन्नम्। तदनन्तरं लखनऊविश्वविद्यालयस्य दर्शनसङ्कायाध्यक्षाणां प्रो. राकेशचन्द्रवर्याणां “समकालीन भारतीय दर्शन की शोधप्रवृत्तियां” इत्यस्मिन् विषये व्याख्यानं जातम्। व्याख्यानमालायाः अन्तिमव्याख्यानस्य तथा सम्पूर्तिसमारोहकार्यक्रमस्य च सञ्चालनं साहित्यविभागस्य आचार्यैः डॉ.अनिलकुमारमहोदयैः कृतम्। सम्पूर्तिसमारोहे मुख्यातिथित्वेन साँचीबौद्धप्राच्यविद्याविश्वविद्यालयस्य पूर्वकुलपतयः प्रो. शशिप्रभाकुमारमहाभागा आसन्, ताभिः “स्वातन्त्र्योत्तर वैशेषिक दर्शन में नईं शोधप्रवृत्तियां” इत्यस्मिन् विषये व्याख्यानं प्रदत्तम्। तदनन्तरं सेन्टस्टीफन्समहाविद्यालयस्य संस्कृतविभागस्य सहाचार्याः डॉ. पङ्कजमिश्रमहाभागाः “स्वातन्त्र्योत्तर न्यायवैशेषिक दर्शन” इत्यस्मिन् विषये व्याख्यानेनानुगृहीतवन्तः। अध्यक्षीयोद्बोधनं परिसरीयनिदेशकवर्यैः प्रो. विजयपालशास्त्रीमहोदयैः कृतम्। सम्पूर्णेऽपि कार्यक्रमे स्वागतभाषणं प्रतिवेदनधन्यवादविज्ञापनादिकार्यं कार्यक्रमसमन्वयकैः न्यायविभागाध्यक्षवर्यैः डॉ. सच्चिदानन्दस्नेहीमहोदयैराचरितम्।

## परिसरे सञ्जातं वृक्षारोपणम्




योगदिवसानन्तरं परिसरस्य नवनिदेशकेन, समागतातिथिना प्रो. अरिन्दम् चक्रवर्तिमहोदयेन च परिसरे वृक्षारोपणं कृतम्। योगदिवसावसरे अनेके वृक्षाः परिसरेण आनीता आसन्। अतस्तेषां समेषां रोपणं भवेदितिधिया परिसरनिदेशकेन प्रो.एम.चन्द्रशेखरमहोदयेन सर्वैः प्राध्यापकैः सह कार्यक्रमोऽयमायोजितः। अस्मिन् अवसरे निदेशकमहोदयेन वृक्षाणां महत्त्वं तत्र प्रतिपादितम्। तैरुक्तं यत् वृक्षं विना अस्माकं जीवनं नैव भवितुमर्हति। अतः वृक्षाणां सुरक्षा स्वजीवनस्य रक्षा इति अस्माभिः ज्ञातव्यम्। प्रो.अरविन्दम् चक्रवर्तिनापि स्वविचाराः अस्मिन् विषये प्रस्तुता। तैरुक्तं यत् मानवस्य जीवनं तावत् सुखपूर्वकमस्ति यावत् पर्यन्तं वृक्षाणां रक्षा भविष्यति। तदभावे वयमपि नष्टाः भविष्यामः। अवसरेऽस्मिन् डॉ.सच्चिदानन्दस्नेही-डॉ.अनिलकुमार-डॉ.-शैलेन्द्रप्रसादउनियाल-श्रीनवीनडोबरियाल- श्रीपङ्कजकोटियाल- स्वप्निलपाण्डे- इत्यादयः प्राध्यापकाः कर्मचारिणश्चोपस्थिता आसन्।



## सप्ताहः परिपालितः-सतर्कता

केन्द्रीयसतर्कता-आयोगेन (Central Vigilance Commission-CVC) प्रतिवर्षम् अक्टूबरमासस्य 26 दिनाङ्कतः नवम्बरमासस्य 01 दिनाङ्कपर्यन्तं सतर्कतासप्ताहस्यायोजनं क्रियते। सरदारवल्लभभाईपटेलमहोदयानां जन्मोत्सवमुपलक्ष्यायं कार्यक्रमः भारतसर्वकारेण परिपाल्यते। अस्य 2021वर्षस्य विषयः- "स्वतन्त्रभारत 75 अखण्डता के साथ आत्म निर्भरता" इति आसीत्। अवसरेऽस्मिन् सर्वासु संस्थासु अस्य आयोजनमभवत्। केन्द्रीयसंस्कृतविश्वविद्यालयस्य श्रीरघुनाथकीर्तिपरिसरेणापि कार्यक्रमोऽयं समाचरितः। परिसरस्य निदेशकेन प्रो.विजयपालशास्त्रिमहोदयेन सर्वैः प्राध्यापकैस्सह सर्वेषां जागरूकतायै प्रतिज्ञा कृता। डा.सच्चिदानन्दस्नेहीमहोदयेन तत्प्रतिज्ञापत्रं पठितं सर्वैः प्राध्यापकैश्च तदनूच्चारितञ्च। तदनन्तरं निदेशकमहोदयेन सर्वे छात्राः समुद्बोधिताः यत्-देशस्य रक्षायै वयं सदा तत्परा भवेम। राष्ट्रस्य सेवैव परमो धर्मः मानवस्य, यावत्पर्यन्तम् अस्माकं देशे किं भवति? भ्रष्टाचारनिवारणार्थमस्माभिः किं कर्त्तव्यम्? एतद् ज्ञानं नैव भविष्यति तावत्पर्यन्तं देशस्य सुरक्षा नैव भवितुमर्हति। व्याकरणविभागाध्यक्षेण प्रो.बनमालीबिश्वालमहोदयेन देशस्य जनता कथं जागरूका भवेत्? तत्सन्दर्भे काव्यमाध्यमेन स्वविचाराः प्रस्तुताः। तदनन्तरं डा. सच्चिदानन्दमहोदयेनापि स्वविचाराः प्रकटिताः यत् भारतदेशः विश्वे यस्मात्कारणात् श्रेष्ठो विद्यते तद् भारतस्य जनताया देशम्प्रति जागरूकता, तद् रक्षणे मानवानां दृढसङ्कल्पश्च। नैके देशभक्ता देशस्य स्वतन्त्रतामखण्डतां च निर्मातुं स्वप्राणान् त्यक्तवन्तः। एवमेव अन्यैः प्राध्यापकैरपि स्वविचारा समुपस्थापिताः। अवसरेऽस्मिन् डॉ.कृपाशङ्करशर्म-डॉ.अनिलकुमार-डॉ.शैलेन्द्रप्रसादउनियाल-डॉ.श्रीओमशर्म-डॉ.अरविन्दगौर- डॉ.वीरेन्द्रबर्वाल- डॉ.दिनेशचन्दपाण्डेय- डॉ.अवधेशचन्दबिजल्वाण- डॉ.सुरेशशर्म-डॉ.अमन्दमिश्र-डॉ.आशुतोषतिवारी-डॉ.जनार्दनसुवेदिमहोदयाः उपस्थिता आसन्। कार्यक्रमस्य सञ्चालनं डॉ.सच्चिदानन्दमहोदयेन धन्यवादज्ञापनं च डॉ.दिनेशपाण्डेयमहोदयेन विहितम्।

## मूलरामायणस्य पाठः



छात्राणां सुखबोधाय संस्कृतकाव्यसंस्काराय च रामायणं विद्यते आदिकाव्यम्, यस्य पारायणेन न केवलं दुःखजरादिनाशो भवति अपितु मोक्षपदमप्याप्नुवन्ति मानवाः। एवं विचार्य श्रीरघुनाथकीर्तिपरिसरे मूलरामायणस्य पाठाय कक्षा समायोजिता । तत्र कार्यक्रमस्य संयोजकः वेदविभागस्याध्यक्षः डॉ.शैलेन्द्रप्रसादउनियालः, सहसंयोजकश्च व्याकरणविभागस्य प्राध्यापकः डॉ.श्रीओमशर्मा आस्ताम्। मध्यावकाशसमये सर्वे छात्राः सामूहिकरूपेण सम्मेलनप्रकोष्ठे मूलरामायणस्य पाठं कुर्वन्ति स्म। मासाभ्यन्तरे सर्वैः छात्रैः मूलरामायणं स्मृतम्, एवं मासात्मकोऽयं कार्यक्रमोऽभवत्।

## ज्योतिषविभागे समायोजिता राष्ट्रिया सङ्गोष्ठी




केन्द्रीयसंस्कृतविश्वविद्यालयस्य श्रीरघुनाथकीर्ति-परिसरस्य ज्योतिषविभागेन द्विदिवसीया राष्ट्रिया शोध-सङ्गोष्ठी 05.03.2022 तः 06.03.2022 दिनाङ्कं यावत् विश्वविद्यालयस्य कुलपतिवर्याणां संरक्षणे विभागीय-प्राध्यापकैः समायोजिता। अस्याः शोध-सङ्गोष्ठ्याः प्रमुखविषय आसीत् "वास्तुशास्त्रस्य साम्प्रतमुपयोगिता"। अस्या शोध-सङ्गोष्ठ्याः चत्वारि सत्राणि समायोजितानि। सङ्गोष्ठ्याः उद्घाटनं 05.03.2022 तमे दिनाङ्के अभवत्। उद्घाटनसत्रस्य विशिष्टातिथयः राष्ट्रपतिपुरस्कारेण सम्मानिताः काशीहिन्दुविश्वविद्यालयस्य संस्कृतविद्याधर्मविज्ञानसङ्कायस्य पूर्वसङ्कायाध्यक्षाः प्रो. रामचन्द्रपाण्डेयमहोदयास्तथा मुखयातिथयः तिरुपतिराष्ट्रियसंस्कृतविश्वविद्यालयस्य कुलपतयः प्रो. राधाकान्तठाकुरवर्या आसन्। एवं सारस्वतातिथि -रूपेण काशीहिन्दुविश्वविद्यालयस्य पूर्वज्योतिषविभागाध्यक्षाः प्रो.विनयकुमारपाण्डेयमहोदयास्तथा-श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयस्य आचार्याः प्रो. दिवाकरदत्तशर्माणः आसन्। प्रथमसत्रस्य अध्यक्षपदम् उत्तराखण्डसंस्कृतविश्वविद्यालयस्य ज्योतिष-वास्तुशास्त्रविभाध्यक्षः डॉ.रतनलालः निरवहत्। तथा पञ्चतत्त्वसंस्थायाः संरक्षकः डॉ.मनोजजुसालमहोदयः विशिष्टव्याख्यानं प्रास्तौत्। द्वितीयसत्रस्य सत्राध्यक्षः श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयस्य वास्तुविभागीयाचार्यः डॉ.देशबन्धुशर्मा आसीत्। सत्रमिदं श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयस्य वास्तुविभागाध्यक्षाणां डॉ.अशोकथपलियालमहोदयानां विशिष्टोद्बोधनेन सम्पूर्ति समध्यगच्छत्। सत्रयोः विविधविश्वविद्यालयेभ्यः अन्तर्जालमाध्यमेन संयुक्ताः एकविंशतिशोधपत्रवाचकाः वास्तुशास्त्रीयशोधपत्राणि प्रास्तुवन्। 06.03.2022 दिनाङ्कस्य द्वितीयसत्रे सङ्गोष्ठ्याः समापनं जातम्। समापनावसरे काशीहिन्दुविश्वविद्यालयस्य ज्योतिषविभागाध्यक्षाः प्रो. गिरिजाशङ्करशास्त्रिमहोदयाः मुख्यातिथिरूपेणोद्बोधितवन्तः तथा सारस्वतातिथिरूपेण श्रीलालबहादुरशास्त्रीराष्ट्रिय- संस्कृतविश्वविद्यालयस्य ज्योतिषविभागाध्यक्षाः प्रो. नीलम-ठगेला, इन्दिरागान्धिमुक्तविश्वविद्यालयस्य संस्कृतविभागाध्यक्षा डॉ. देवेशमिश्रमहोदयाःच स्वीयाशीर्वचोभिः मार्गदर्शनं कृतवन्तः।

## छात्राणां फरवरीमासस्य 15 दिनाङ्कात् मार्चमासस्य 16 दिनाङ्कपर्यन्तं सत्रार्द्धपरीक्षा सम्पन्ना

केन्द्रीयसंस्कृतविश्वविद्यालयेन अस्मिन् सत्रेऽपि छात्राणां परीक्षा करोनाकारणात् आनलाइनमाध्यमेनैव समायोजिता। परीक्षाया आयोजनं फरवरीमासस्य 15 दिनाङ्कात् मार्चमासस्य 16 दिनाङ्कपर्यन्तम् अभवत्। परीक्षासमितेः संयोजकेन डॉ.अनिलकुमारेण सदस्यैश्च श्रीनवीनडोबरियाल-श्रीपङ्कजकोटियाल-चन्दनरावतमहोदयैः व्हाटसापमाध्यमेन प्रत्येककक्षायाः समूहं निर्माय तेन माध्यमेन परीक्षायाः सञ्चालनं कृतम्। त्रिहोरात्मकः कालः प्रश्नानामुत्तरं लेखनाय, एकहोरात्मकश्च उत्तरपुस्तिकाप्रेषणाय आसीत्। सम्पूर्णा परीक्षा अत्यन्तमनुशासनपूर्वकं सम्पन्ना।



## हर्षोल्लासपूर्वकं सम्पन्ना राज्यस्तरीयशास्त्रीयस्पर्धाः

जानन्ति एव भवन्त यत्प्रतिवर्षं संस्कृतशास्त्रसंरक्षणाय कृतसङ्कल्पेन केन्द्रीयसंस्कृतविश्वविद्यालयेन तत् तत् शास्त्रेषु विभिन्नाः स्पर्धा आयोज्यन्ते। तस्मिन्नेव क्रमे तस्यैव अङ्गभूतत्वेन श्रीरघुनाथकीर्तिपरिसरेण राज्यस्तरीयशास्त्रीयस्पर्धाः मार्चमासस्य 10 दिनाङ्कात् 12 दिनाङ्कपर्यन्तं समायोजिताः। आहत्य विभिन्नसंस्थातः अत्र 70 छात्राः समागताः तेषां कृते च चतुर्दश-स्पर्धाः समायोजिताः। अस्य कार्यक्रमस्योद्घाटनावसरे श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयात् साहित्यसंस्कृतिसङ्कायप्रमुखाः प्रो.भागीरथिनन्दमहोदयाः मुख्यातिथिरूपेण आसन् तैश्च कथं संस्कृतस्य आधुनिकविषयैः सह समावेशः भवितुमर्हति? कथं आधुनिकाः संस्कृतम्प्रति स्वरुचिं प्रदर्शयन्ति? अस्माकं जीवने आधिदैविक-आध्यात्मिक-भौतिकोन्नतीनां समावेशः संस्कृतेनैव कथं भविष्यति इत्युक्तम्। श्रीरघुनाथकीर्तिआदर्शसंस्कृतविद्यालयस्य प्राचार्याः डॉ.शैलेन्द्रनारायणकोटियालमहोदयाः सारस्वतातिथिरूपेण समागताः, यैश्च संस्कृतशास्त्राणामध्ययनमेव सर्वेषां ज्ञानानां मूलं विद्यते तदेव मूलं यदि दृढं भवति तदैव देशस्य सामान्यमानवस्य च कल्याणं भविष्यति एवं छात्राः सम्बोधिताः। कार्यक्रमे परिसरस्य निदेशकाः प्रो.विजयपालशास्त्रिणः अध्यक्षरूपेण विराजमाना आसन्। संस्कृतविदुषामेका विस्तृतपरम्परा तैः प्रस्तुता, पूर्वमस्माभिः



नैतिकजीवनस्योत्थानाय समाजस्य रक्षायै च कार्यं कर्त्तव्यं तेनैव जीवनं सफलं भविष्यति इति ते उद्बोधितवन्तः। प्रथमदिवसे समस्यापूर्ति-साहित्यश्लाका-अक्षरश्लोकस्पर्धाः समायोजिताः। द्वितीये दिने प्रातःकाले शास्त्रीयस्फूर्ति-वेदभाष्यभाषणम्-ज्योतिषभाषणम्-साहित्यभाषणम्-व्याकरणभाषणानि समायोजितानि। तथैव अपराह्णे कण्ठपाठप्रतियोगितासु अष्टाध्यायी-धातुपाठ- भगवद्गीता- अमरकोष-काव्यकण्ठपाठानां शास्त्रर्थविचारस्य च



आयोजनम् अभवत्। एवं 14 प्रतियोगितानाम् आयोजनमत्र जातम्। एकस्यां प्रतियोगितायां द्वौ निर्णायकौ आस्ताम्, सर्वेषां निर्णायकानां संयोजकानां च स्वागतं परिसरस्य स्मृतिचिह्नप्रदानेन फोल्डरइत्यादिप्रदानेन च विहितम्। ये छात्राः प्रतियोगितासु स्थानं लब्धवन्तः, तेषां नामानि प्रतियोगितानां नामानि चाधो लिखितानि सन्ति।

| क्र.सं. छात्रनाम | प्रतियोगिता | स्थानम् |
|---|---|---|
| 1. भानुप्रतापआर्यः | समस्यापूर्तिः | तृतीयम् |
| 2. शुभाङ्गिनी आर्या | समस्यापूर्तिः | द्वितीयम् |
| 3. निशान्तकुमारः | समस्यापूर्तिः | प्रथमम् |
| 4. यशस्वी कौशिकः | गीताकण्ठपाठः | तृतीयम् |
| 5. स्वातिः | गीताकण्ठपाठः | द्वितीयम् |
| 6. प्रिया | गीताकण्ठपाठः | प्रथमम् |
| 7. अनिलभट्टः | शास्त्रीयस्फूर्तिः | तृतीयम् |
| 8. धनञ्जयदेवराडी | शास्त्रीयस्फूर्तिः | तृतीयम् |
| 9. आकाशः | शास्त्रीयस्फूर्तिः | द्वितीयम् |
| 10. निशान्तकुमारः | शास्त्रीयस्फूर्तिः | द्वितीयम् |
| 11. जीवनचन्दजोशी | शास्त्रीयस्फूर्तिः | प्रथमम् |
| 12. कृपारामशर्मा | शास्त्रीयस्फूर्तिः | प्रथमम् |
| 13. खुशीपूर्वे | धातुकण्ठपाठः | तृतीयम् |
| 14. आकाशः | धातुकण्ठपाठः | द्वितीयम् |
| 15. दीक्षासिंहः | धातुकण्ठपाठः | प्रथमम् |
| 16. पीयूषः | अष्टाध्यायीकण्ठपाठः | तृतीयम् |
| 17. मनोजकुमारः | अष्टाध्यायीकण्ठपाठः | द्वितीयम् |

| क्र.सं. छात्रनाम | प्रतियोगिता | स्थानम |
|---|---|---|
| 18. सक्षमआर्यः | अष्टाध्यायीकण्ठपाठः | द्वितीयम् |
| 19. अङ्किता | अष्टाध्यायी | प्रथमम् |
| 20. सक्षमआर्यः | अक्षरश्लोकी | तृतीयम् |
| 21. निशान्तकुमारः | अक्षरश्लोकी | द्वितीयम् |
| 22. ऋतेशपाण्डेयः | अक्षरश्लोकी | प्रथमम् |
| 23. सिद्धिः | अमरकोषकण्ठपाठः | प्रथमम् |
| 24. ऋचाअग्रवालः | काव्यकण्ठपाठः | प्रथमम् |
| 25. जीवनचन्द्रजोशी | शास्त्रार्थविचारः | प्रथमम् |
| 26. शुभमभट्टः | वेदभाष्यभाषणम् | तृतीयम् |
| 27. आयुषउनियालः | वेदभाष्यभाषणम् | द्वितीयम् |
| 28. भानुप्रतापआर्यः | वेदभाष्यभाषणम् | प्रथमम् |
| 29. नितिनरतूडी | ज्यौतिषभाषणम् | द्वितीयम् |
| 30. मनीषभट्टः | ज्यौतिषभाषणम् | प्रथमम् |
| 31. धनञ्जयदेवराडी | साहित्यभाषणम् | प्रथमम् |
| 32. लोकेशचन्द्रः | व्याकरणभाषणम् | द्वितीयम् |
| 33. अनिलभट्टः | व्याकरणभाषणम् | प्रथमम् |
| 34. राजारामडंगवालः | साहित्यश्लाका | प्रथमम् |












## शोधसमितेः उपवेशनम्

केन्द्रीयसंस्कृतविश्वविद्यालस्य शिक्षाजगति विशिष्टेन च संस्कृतिजगति विद्यते ख्यातिः। प्राक्शास्त्रीतो विद्यावारिधिपर्यन्तमत्र विभिन्नेषु विषयेषु छात्रा अध्ययनं कुर्वन्ति। शोधकार्येष्वपि विशिष्टमेव योगदानमस्याः संस्थाया विद्यते। प्रतिवर्षं देशस्य विभिन्नेभ्यः प्रान्तेभ्यः छात्रा आगत्य शोधकार्यं कुर्वन्ति। लिखितपरीक्षामाध्यमेनात्र छात्राणां शोधकार्यार्थं चयनं भवति। पूर्वं तेषां प्रशिक्षणं प्रचलति, तदनन्तरं शोधकार्यार्थं परिसरेषु समागच्छन्ति। श्रीरघुनाथकीर्तिपरिसरे शोधकार्यार्थं समागतेषु छात्रेषु गिरीशचन्द्रबहुगुणा-भास्करबर्मन्-शुभमममगाई महोदयाः आसन्। येषां शोधकार्यपूर्वप्रस्तुतपञ्जिकां निरीक्षणार्थं छात्राणां च परीक्षणार्थं शोधसमितेरुपवेशनम् अप्रैलमासस्य 22 दिनाङ्के अभवत्। शोधसमितेः संस्तुतेः परं तेषां शोधप्रारूपं मुख्यालयं प्रति प्रेषितं, ततः स्वीकृतिः यदा भविष्यति तदा एते छात्राः शोधकार्यं विधास्यन्ति।

## कुलपतिना सह अखिलसाहित्यविभागस्योपवेशनम्

केन्द्रीयसंस्कृतविश्वविद्यालयेन अप्रैलमासस्य 20 दिनाङ्कात् 23 दिनाङ्कपर्यन्तं सर्वेषु परिसरेषु विद्यमानानां विषयाणां परिज्ञानाय मुख्यविभागाध्यक्षेण विभागीयप्राध्यापकैश्च सहैकमुपवेशनम् आनलाइनमाध्यमेनायोजितम् । तत्र कस्मिन् परिसरे कस्मिन् विषये कति छात्राः, कति प्राध्यापकाः, काश्च सुविधाः काश्च समस्याः सन्ति तत्सर्वं विज्ञातुं कुलपतिमहोदयाः स्वयमेव समुपस्थिताः आसन्। अप्रैलमासस्य 21 दिनाङ्के साहित्यविभागस्योपवेशनमासीत्, तत्र साहित्यविभागाध्यक्षेण अस्माकं परिसरनिदेशकेन प्रो.विजयपालशास्त्रिणा साहित्यविभागस्य सर्वं वृत्तं प्रस्तुतम्। विभिन्नेभ्यः परिसरेभ्यस्तत्र साहित्यस्य प्राध्यापकाः विद्यमानाः आसन् , तैरपि स्वसमस्यानां विषये अपि चोपलब्धीनां विषये विचाराः प्रस्तुताः। तदनन्तरं कुलपतिभिः स्वविचाराः समुपस्थापिताः। एवं कुलपतिभिः सह सर्वेषां विभागानामुपवेशनं जातम्।



## बसन्तपञ्चमीदिवसे परिसरे सरस्वतीपूजनम्

ज्ञानस्य देवी विद्यते भगवती सरस्वती, या सर्वेभ्यः ज्ञानं प्रयच्छति। वसन्तकाले सम्पूर्णं वातावरणं सुरम्यं पुष्पितं पल्लवितं च भवति। अतः ज्ञानस्य सञ्चरणमपि अस्मिन् काले आधिक्येनानुभूयते सर्वैः। तस्मात् बसन्तकालस्य 5 तिथौ भगवत्याः सरस्वत्याः समर्चना सर्वैः ज्ञानानुरागिभिः क्रियते। अस्मिन् वर्षे अयं कार्यक्रमः फरवरीमासस्य 5 दिनाङ्के भगवत्याः भक्तैः परिपालितः। श्रीरघुनाथकीर्तिपरिसरे सरस्वतीपूजनार्थं वेदविभागस्य डा.शैलेन्द्रप्रसादउनियालमहोदयेन सम्मेलनकक्षे कार्यक्रमः समायोजितः। अत्र परिसरस्य निदेशकमहोदयेन सह सर्वे परिसरीयाः प्राध्यापकाः छात्राश्च सरस्वत्याः समर्चनायै एकत्रिताः अभवन्। वैदिकमन्त्रैः घण्टाशङ्खवादनपुरस्सरं मङ्गलपद्यैः सर्वैः भक्तैः भगवती समाराधिता। केचन प्राध्यापकाः स्वकाव्यमपि पठितवन्तः, छात्राश्च स्तोत्रपाठं कृतवन्तः। पूजनानन्तरं प्रसादवितरणमभवत्। अवसरेऽस्मिन् परिसरस्य सर्वे प्राध्यापकाः कर्मचारिणश्च समुपस्थिताः आसन्।

## पुरातनप्राध्यापकानां स्थानान्तरणम्, नूतनप्राध्यापकानाम् आगमनम्







केन्द्रीयसंस्कृतविश्वविद्यालयस्य विद्यते एका प्रक्रिया स्थानान्तरणस्य, यदापि यस्मिन् परिसरे विश्वविद्यालयः प्राध्यापकानाम् अभावमनुभवति तदैव कस्मादपि परिसरात् कस्यापि स्थानान्तरणं कर्तुं शक्नोति। अस्मिन्नेव प्रसङ्गे श्रीरघुनाथकीर्तिपरिसरात् व्याकरणविभागाध्यक्षाणां पूर्वनिदेशकानां प्रो. बनमालीबिश्वालमहोदयानां देहलीमुख्यालयं प्रति स्थानान्तरणं सञ्जातम्। एवमेव अप्रैलमासस्य 22 दिनाङ्के साहित्यविभागस्य प्राध्यापकस्य डॉ.कृपाशङ्करशर्ममहोदयस्य भोपालपरिसरं प्रति स्थानान्तरणमभवत्। हरिबहादुरथापामहोदयस्यापि स्थानान्तरणं मुख्यालयं प्रति अभवत्। यथा स्थानान्तरणं प्राध्यापकानामभवत् तथैव नूतनप्राध्यापकानाम् आगमनमपि परिसरे जातम्। डा.मोनिका बोल्ला व्याकरणविभागे अतिथिरूपेण प्राध्यापिका समागता। डा.मोनिका बोल्ला मूलतः आन्ध्रप्रदेशीया वर्तते। गुरुकुलपरम्परया अस्या अध्ययनं जातम्। केन्द्रीयसंस्कृतविश्वविद्यालयस्य मुम्बईपरिसरतः 'वैयाकरणभूषणसारस्य धात्वाख्यातार्थप्रकरणस्य शाङ्करीव्याख्यादृशा परिशीलनम् इति शोधकार्यं विधाय श्रीरघुनाथपरिसरे समागता। डॉ.मनीषाआर्यापि उत्तरप्रदेशस्य बिजनौरजनपदस्य नूरपुरग्रामादत्र व्याकरणविभागे अतिथिप्राध्यापिकारूपेण आगता। गुरुकुलपरम्परया शिक्षामवाप्य केन्द्रीयसंस्कृतविश्वविद्यालयस्य लखनऊपरिसरतः 'काशिकायाः पञ्चमषष्ठाध्यायोः प्रत्युदाहरणानां शिक्षाशास्त्रदृष्ट्या प्रक्रियाविमर्शः इति शोधकार्यमियं कृतवती। अद्वैतवेदान्ते आचार्यकक्षायां लब्धस्वर्णपदकः रघु बी.राजः अतिथिप्राध्यापकरूपेण बैगलूरुतः समागतः। एवमेका अन्या प्राध्यापिका मनुआर्या अपि समागता आसीत् परं च उत्तरप्रदेशउच्चशिक्षायां तया स्थायीपदं प्राप्तं तस्मात् सा गतवती।

## भारतसर्वकारेण परिकल्पितस्य 75 सूर्यनमस्कारकार्यक्रमस्योद्घाटनम्



जनवरीमासस्य 27 दिनाङ्के सम्पूर्णभारते भारतसर्वकारेण सूर्यनमस्कारस्य आयोजनं कृतम्। यतोहि शरीरमाद्यं खलु धर्मसाधनम्, अतः शरीरस्य स्वास्थ्यमावश्यकं विद्यते। तत्र सन्ति अनेकानि योगासनानि शरीरधर्मसाधकानि। तेषु आसनेषु सर्वश्रेष्ठमासनं सूर्यनमस्कारो वर्तते यतोहि तेन सम्पूर्णशरीरस्य व्यायामो भवति अपि च सूर्योपासना जायते। तस्मात् 75 कोटिसूर्यनमस्कारस्य कार्यक्रमो भारतसर्वकारेण समायोजितः। सर्वासु संस्थासु अस्य कार्यक्रमस्यायोजनं कृतमासीत्। श्रीरघुनाथकीर्तिपरिसरे डॉ.गौतमचौधरिणः संयोजकत्वे सर्वे प्राध्यापकाः, छात्राः, कर्मचारिणश्च सूर्यनमस्कारकार्यक्रमं सफलीकृतवन्तः। अयं कार्यक्रमः नूतनभवनस्य सम्मेलनकक्षे समायोजितः। परिसरस्य निदेशकमहोदयेन सूर्यनमस्कारस्य महत्त्वमस्मिन् कार्यक्रमे स्वभाषणे प्रस्तुतम्। एवं प्रकारेण सूर्यनमस्कारकार्यक्रमस्यायोजनं हर्षोल्लासेन परिसरे सञ्जातम्।

## परिसरे समायोजिताः क्रीडाप्रतियोगिताः

स्वस्थशरीरे एव स्वस्थमस्तिष्को वसति, अपि च शरीरमाद्यं खलु धर्मसाधनमितिधिया स्वस्थं शरीरमावश्यकम्। अतः एव विभिन्नेषु विद्यालयेषु महाविद्यालयेषु विश्वविद्यालयेषु शरीरस्याभिवृद्धये मनोरञ्जनाय च शारीरिकक्रीडाः छात्राणां समायोज्यन्ते। श्रीरघुनाथकीर्तिपरिसरे अस्मिन् वर्षे मईमासस्य 22 दिनाङ्कात् 24 दिनाङ्कपर्यन्तं वार्षिकक्रीडाप्रतियोगितानां समायोजनं शारीरिकशिक्षायाः सहायकनिदेशकेन कृतम्। अस्मिन् कार्यक्रमे नैकाः प्रतियोगिता आसन् तद्यथा-धावन-कूर्दन-गोलकक्षेपण-चक्रक्षेपण-शतरञ्ज-कैरम-बैडमिटन-योगा-पादकन्दुक-क्रासफिट इत्यादयाः। धावनप्रतियोगितापादकन्दुके गवर्नमेन्टडिग्रीकालेज देवप्रयागे, बैडमिन्टनप्रतियोगिता बाहबाजारथाना पौडी देवप्रयागे, अन्याश्च सर्वा परिसरस्य नूतनभवने समायोजिताः। प्रतियोगिनां यथा स्थानानि लब्धानि तेषां सूचना एवं विद्यते-







| क्र.सं. | प्रथमः | द्वितीयः | तृतीयः | प्रतियोगिता |
|---|---|---|---|---|
| 1. | आदित्यटोडरिया | गौरवडबरालः | भास्करबहुगुणा | धावनम् (100मी-पुरुषः) |
| 2. | मधुः | मोनिका | माधुरी | धावनम् (100मी-महिला) |
| 3. | आदित्यटोडरिया | आशुतोषसेमवालः | भास्करखंकरियालः | धावनम् (200मी-पुरुषः) |
| 4. | राजेशपन्तः | विशाल अरेला | मनीषभट्टः | धावनम् (400मी-पुरुषः) |
| 5. | गौरवडबरालः | अनूपभट्टः | सूरजपैन्यूली | धावनम् (800मी-पुरुषः) |
| 6. | मुकेशनौडियालः | अनूपभट्टः | अभिषेकसती | धावनम् (1500मी-पुरुषः) |
| 7. | अभिषेककुकरेती | मिहिरधस्माना | आशुतोषसेमवालः | कूर्दनम् (पुरुषः) |
| 8. | मधुः | मोनिका | माधुरी | कूर्दनम् (स्त्री) |
| 9. | अभिषेककुकरेती | गौरवकोठारी | धनञ्जयः | चक्रक्षेपणम् (पुरुषः) |
| 10. | प्रियङ्कपञ्चभैया | दिव्यांशुखण्डूरी | तूषारः | गोलक्षेपणम् (पुरुषः) |
| 11. | त्रिलोकेशः | भास्करः | राहुलः | योगः (पुरुषः) |
| 12. | मिहिरधस्माना | रोहितभट्टः | दिव्यांशुखण्डूरी | शारीरिकदक्षता (पुरुषः) |
| 13. | प्रियङ्कपञ्चभैया | गौरवकोठारी | | बैडमिण्टनम् (पुरुषः) |
| 14. | श्रुतिशर्मा | वर्षानेगी | | बैडमिण्टनम् (महिला) |
| 15. | डॉ.अमन्दमिश्रः | अङ्कितः | | शतरञ्जः (कर्मचारि) |
| 16. | श्रीस्वप्निलपाण्डेयः | दिनेशपाण्डेयः | | बेडमिण्टन (कर्मचारि) |
| 17. | मोहितशर्मा | राहुलप्रकाशतिवारी | प्रियांशुबाबुलकरः | प्रश्नमञ्चः (पुरुषः) |
| 18. | दिव्यांशुखण्डूरी | शुभमभट्टः | साध्वीदेवाश्रिता | आनलाइनयोगासनचित्रम् |
| 19. | मन्दीपसिंहरावतः | श्रुतिशर्मा | रोहितलखेडा | आनलाइनयोगासनचलचित्रम् |

अस्य कार्यक्रमस्य आयोजनसमितेः संयोजका डॉ.गौतमचौधरिमहोदयाः, अन्ये च डॉ.सुरेशशर्म-श्रीआशुतोषतिवारि-डॉ.अरविन्दसिंहगौर-श्रीजनार्दनसुवेदि-डॉ.अवधेशचन्दबिजल्वाण-डॉ.दिनेशचन्द्रपाण्डेयाः सदस्याः आसन्। एवं श्रीरघुनाथकीर्तिपरिसरेण क्रीडादिवसः हर्षोल्लासेन परिपालितः।











## परिसरे समायोजितो मतदातृदिवसः



विश्वस्य विभिन्नदेशेषु यथा लोकतान्त्रिकता विद्यमानाऽस्ति तथैव भारतेऽपि। परञ्च भारतमेकं विस्तृतं लोकतान्त्रिकरूपेण विश्वे प्रसिद्धमस्ति। संविधाने विद्यन्ते सर्वेषां जनानां कृते केचन विशिष्टा अधिकारास्तेष्वधिकारेषु स्वेच्छया शासकस्य चयनमप्येकमस्ति। चयनस्य सोऽधिकारः मतदातृदिवसरूपेण भारतसर्वकारेण समायोज्यते। 25जनवरी 1950 तमे चुनावायोगस्य स्थापना जाता आसीत्। भारतस्य महिलाराष्ट्रपतिना माननीयप्रतिभापाटिलमहोदयया 25 जनवरी 2011 तमे प्रथमः मतदातृदिवसः परिपालितः। तदनन्तरं प्रतिवर्षं जनवरीमासस्य 25 दिनाङ्के दिवसोऽयं समायोज्यते। अस्मिन् वर्षे 11 तमो दिवसः भारतसर्वकारेणायोजितः। केन्द्रीयसंस्कृतविश्वविद्यालयस्य श्रीरघुनाथकीर्तिपरिसरेणापि तस्य दिवसस्यायोजनं कृतमासीत्। सर्वैः प्राध्यापकैः निदेशकमहोदयेन सह मिलित्वा स्वाधिकारस्य प्रयोगार्थं प्रतिज्ञा कृता। परिसरस्य निदेशकमहोदयेन प्रो.विजयपालशास्त्रिणा मतदानस्य महत्त्वं प्रस्तूय तस्याधिकारस्य प्रयोगः सर्वदा करणीयः इत्युक्तम्। अन्येषु प्राध्यापकेषु डॉ.सच्चिदानन्दस्नेही-डॉ.अनिलकुमार-डॉ.अरविन्दगौर-महोदयैरपि अस्मिन् विषये स्वविचाराः समुपस्थापिताः। अस्मिन् अवसरे परिसरस्य सर्वे प्राध्यापकाः शिक्षणेतरकर्मचारिणश्चापि समुपस्थिता आसन्।

## भव्येन सञ्जातं गणतन्त्रदिवसस्यायोजनम्



“गायन्ति देवाः किल गीतकानि धन्यास्तु ते भारतभूमिभागे” एवम्भूतो विद्यते देशः अस्माकं यत्र देशस्य गणतन्त्रार्थं नैके भारतमातुः सुताः स्वप्राणान् त्यक्तवन्तः। भारतस्य प्रथमगणतन्त्रदिवसः 26 जनवरी 1950 तमे महता हर्षोल्लासेन समायोजितः आसीत्, तत आरभ्य प्रतिवर्षं गणतन्त्रदिवसस्यायोजनं सर्वासु शैक्षणिकसंस्थासु तदितरसंस्थासु च क्रियते। अस्मिन् वर्षे भारतस्य 73 तमोऽयं दिवस आसीत्। केन्द्रीयसंस्कृतविश्वविद्यालयस्य श्रीरघुनाथकीर्तिपरिसरेणापि महतोल्लासेनायं दिवसः परिपालितः। परिसरस्य निदेशदेशकवर्येण प्रो.विजयपालशास्त्रिणा राष्ट्रीयध्वजोत्तलनं विहितम्। तेन भारतस्य वीरपुत्रैः कृतस्य प्राणत्यागस्य स्मरणं कृत्वा माल्यार्पणं तेषां प्रतिमासु कृतम्। तदनन्तरं स सर्वान् प्राध्यापकान् छात्रान् चोद्बोधितवान्। भारतदेशस्य रक्षा अस्माकं परमं कर्त्तव्यं विद्यते, अस्माकं पूर्वजैः महता कष्टेन वैदेशिकानां पाशात् विमुक्तोऽयं देशः। अतः सर्वतो भावेन अस्य सुरक्षा अस्माकं धर्मोऽपि भवति। अस्मिन् अवसरे डा.सच्चिदानन्दस्नेहीमहोदयेन भारतसंविधानस्य प्रस्तावना पठिता, तथा च सर्वैः तस्या पालनं करणीयमित्युक्तम्। डा.अनिलकुमारेण देशस्य रक्षार्थं प्रेरणाप्रदं काव्यं तत्र प्रस्तुतम्। अन्यैः प्राध्यापकैरपि अस्मिन् अवसरे स्वविचाराः प्रस्तुताः। कार्यक्रमस्य सञ्चालनं शारीरिकशिक्षासहायकनिदेशकेन डॉ.गौतमचौधरिणा कृतमासीत्।

## प्रधानमन्त्रीमहोदयस्य छात्रोद्बोधनकार्यक्रमस्यायोजनम्




मईमासे सम्पूर्णभारते माध्यमिकशिक्षाया: परीक्षा समागच्छति यस्मात्कारणात्सर्वेषां छात्राणां मनसि तत्कृते भयं भवति। अत: छात्रान् उद्बोधयितुम् अप्रैलमासस्य 01.04.2022 तमे दिनाङ्के भारतस्य प्रधानमन्त्रिणा एक: कार्यक्रम: समायोजित:, यस्मिन् भारतस्य सर्वे छात्रा: समुपस्थिता आसन्। केन्द्रीयविश्वविद्यालयस्य श्रीरघुनाथकीर्तिपरिसरेणापि तस्मिन् दिवसे छात्राणामेकमुपवेशनं कारितम्। तत्र परिसरस्य सर्वे प्राध्यापका अपि समुपस्थिता आसन्, निदेशकमहोदयस्य निर्देशनेऽयं कार्यक्रम आयोजित:। ऑनलाइनमाध्यमेन आदौ शिक्षामन्त्रिणा सम्पूर्णदेशस्य छात्रा: सम्बोधिता:, तदन्तरं देशस्य प्रधानमन्त्रिणा श्रीमता नरेन्द्रमोदिना छात्राणां समस्या: श्रुता:, तासां समाधानं च कृतम्। कार्यक्रमसमापनान्तरं परिसरस्य निदेशकेनापि स्वपरिसरस्य छात्रा: उपदिष्टा:। एवमयं कार्यक्रम: हर्षोल्लासेन परिपालित:।

## नूतनछात्रावासे प्रवेश:



श्रीरघुनाथकीर्तिपरिसरे विविधेभ्य: प्रान्तेभ्य: छात्रा: समागत्य अध्ययनं कुर्वन्ति, परिसरस्य नूतनं भवनं प्रायश: निर्मितम्, यत्र च आहत्य 6 छात्रावासा: सन्ति, तेषु एक: बालिकाभ्योऽपि वर्तते। भारतसर्वकारस्य "सीपीडब्ल्यूडी" द्वारा सम्पूर्णपरिसरभवनस्य निर्माणमभवत्। पूर्वं परिसरेण रघुनाथभवनं परिसरात् बहि: छात्रावासरूपेण स्वीकृत: आसीत्। परञ्च यदा परिसरे छात्रावासस्य निर्माणं जातं, तदा एकस्मिन् छात्रावासे छात्राणां प्रवेश: कारित:। तत्र छात्रावासस्य एका समिति: गठिता यत्र डॉ.सच्चिदानन्दस्नेहीमहोदय: छात्रावासप्रमुखरूपेण वर्तते। अप्रैलमासस्य द्वितीयदिनाङ्के छात्रावासे अवसरेऽस्मिन् सर्वै: छात्रै: भवनप्रवेशपूजनमनुष्ठितं यत्र च परिसरीयप्राध्यापका: अपि समुपस्थिता आसन्। वेदविभागाध्यक्षेण डॉ. शैलेन्द्रप्रसादउनियालमहोदयेन डा.अमन्दमिश्रेण च वैदिकविधिना पूजनानन्तरं यज्ञमपि सम्पादितम्। कार्यक्रमेऽस्मिन् परिसरीयप्राध्यापकेषु डॉ.कृपाशङ्करशर्म-डॉ.सुरेशशर्म-डॉ.जनार्दनसुवेदि-डॉ.श्रीओमशर्म-डॉ.वीरेन्द्रसिंहबर्त्वाल-इत्यादय: समुपस्थिता आसन्।



## संस्कृतसम्भाषणस्यायोजनम्

कस्या अपि भाषायाः स्वविशिष्टमेव महत्त्वं भवति। यदा भाषामाध्यमेन विषयं पाठनाय चर्चा क्रियते, तदा तु भाषाया ज्ञानमत्यावश्यकं प्रतीयते। अतः भाषाशिक्षणेन सह भाषणमप्यावश्यकम्। संस्कृतभाषायाः शिक्षणमपि तदैव रुचिकरं भवति यदा तद् विषयज्ञानमपि तस्यामेव भाषायामेव कार्यते। केन्द्रीयसंस्कृतविश्वविद्यालयस्य श्रीरघुनाथकीर्तिपरिसरस्य छात्रावासे 13-11-2021 दिनाङ्के संस्कृतसंभाषणवर्गः लेखनानुवादवर्गश्च समुद्घाटितौः। उद्घाटनसत्रे अध्यक्षरूपेण प्रो.विजयपालशास्त्रिमहोदयाः मान्याः निदेशकाः, मुख्यातिथित्वेन डॉ.शैलेन्द्रप्रसादउनियालमहोदयाः, मुख्यवक्तृरूपेण डॉ.श्रीओमशर्ममहोदयाः, सारस्वतातिथिरूपेण डॉ.अमन्दमिश्रमहोदयाः, विशिष्टातिथिरूपेण च डॉ.मनीषशर्ममहोदयाः आसन्। अस्य संस्कृतसम्भाषणवर्गस्य लेखनानुवादवर्गस्य च संयोजकौ डॉ.शैलेन्द्रप्रसादउनियालमहोदयः डॉ.श्रीओमशर्ममहोदयश्च आस्ताम्। तत्र प्राक्शास्त्रीतः विद्यावारिधिपर्यन्तं विद्यमानैः छात्रैः भागो गृहीतः।

## केन्द्रीयसंस्कृतविश्वविद्यालयेन समायोजितः उत्कर्षमहोत्सवः




केन्द्रीयसंस्कृतविश्वविद्यालयः पूर्वं राष्ट्रियसंस्थाननाम्ना प्रसिद्ध आसीत्। परं च अप्रैलमासस्य 7 दिनाङ्के 2020 तमे संस्थानमिदं केन्द्रीयसंस्कृतविश्वविद्यालयेन परिणतम्। अनेन सह श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम् नवदेहली, संस्कृतविद्यापीठम् तिरुपतिः इत्यनयोरपि तथैव स्थितिः सञ्जाता। अतः अस्मिन् 2022 तमे वर्षे मईमासे 7 दिनाङ्कात् 9 दिनाङ्कपर्यन्तं स्वोत्कर्षमहोत्सवः समायोजितः, अयं चोत्सवः त्रयाणां विश्वविद्यालयानां सामूहिकरूपेणासीत्। यत्र विदुषां व्याख्यानानि नवशिक्षायुगे संस्कृतस्य विश्वतोमुखत्वमिति विषयमधिकृत्य जातानि। मुख्यरूपेणात्र भारतस्य मन्त्रिणः धर्मेन्द्रप्रधान-मुरलीमनोहरजोशी-रमेशपोखरियालनिशङ्कमहोदयाः समागताः आसन्। सर्वेषां परिसराणां निदेशकैरपि स्वविचाराः तत्र प्रकटिताः। अत्र न केवलं शिक्षायामाधुनिकतत्त्वानां समावेशस्य चर्चा कृता, अपितु भारतस्य संस्कृति-सभ्यता-समाजस्योत्थानाय अस्माभिः किं करणीयम्, शिक्षायां नवाचारसमावेशाय के के उपायाः कर्त्तव्या इत्यस्मिन् विषये च विस्तरेण चर्चा सञ्जाता।

## व्यवसायिकपौरोहित्यप्रशिक्षणवर्गस्यायोजनम्




केन्द्रीयसंस्कृतविश्वविद्यालयस्य वित्तीयसहयोगेन श्रीरघुनाथकीर्तिपरिसरस्य वेदविभागेन आन्तरिकगुणवत्ताप्रकोष्ठेन च 21दिनात्मकः 08.032022 दिनाङ्कात् 27.03.2022 दिनाङ्कपर्यन्तं पौरोहित्यप्रशिक्षणकार्यशाला आनलाइनमाध्यमेन समाचरिता। अस्य कार्यक्रमस्योद्घाटनावसरे केन्द्रीयसंस्कृतविश्वविद्यालयस्य कुलपतयः संरक्षकत्वेन, परिसरस्य निदेशकाः प्रो.विजयपालशास्त्रिणः अध्यक्षत्वेन, वेदविभागस्य अध्यक्षाः डॉ.शैलेन्द्रप्रसादउनियालमहोदयाः संयोजकत्वेन च विद्यमाना आसन्। मुख्यातिथित्वेनात्रोपस्थिताश्च दरभङ्गासंस्कृतविश्वविद्यालयस्य कुलपतयः प्रो.शशिनाथझामहोदयाः। सारस्वतातिथिरूपेण राष्ट्रपतिपुरस्कारेण सम्मानिताः प्रो.वेदप्रकाशउपाध्यायमहोदयाः, केन्द्रीयसंस्कृतविश्वविद्यालस्य मुख्यालयतः प्रो.बनमालीबिश्वालमहोदयाः, जम्मूपरिसरतः प्रो.मनोजमिश्रमहोदयाश्च आसन्। कार्यक्रमस्य सञ्चालनं वेदविभागाध्यक्षेण डा.शैलेन्द्रप्रसादउनियालमहोदयेन कृतम्। समागतानां स्वागतं न्यायविभागाध्यक्षेण डॉ. सच्चिदानन्दस्नेहीमहोदयेन कृतम्। 21 दिवसात्मके अस्मिन् कार्यक्रमे देवपूजन-वैदिककर्मकाण्डविमर्श-ग्रहशान्तिपद्धतेः स्वरूपविमर्श-कलशस्थापना-तन्महत्त्व -उपनयनसंस्कार-पञ्चाङ्गपूजनविषयकाणि विभिन्नानि व्याख्यानानि विशेषज्ञैः प्रदत्तानि। तत्र मुख्याः जनार्दनसुवेदि-प्रो.विजयशङ्करशुक्ल-प्रो.महेन्द्रपाण्डेय-डॉ.अमन्दमिश्र-प्रो-हृदयरञ्जनशर्म-प्रो.राममूर्तिशर्म-प्रो.विद्येश्वरझा आचार्यज्योतिप्रसादउनियाल-महोदया आसन्। प्रतिभागिभिः सोत्साहपूर्वकमत्र भागग्रहणं कृतम्।

## परिसरे नवनिदेशकस्यागमनम्



जूनमासस्य 14 दिनाङ्के श्रीरघुनाथकीर्तिपरिसरे नवनिदेशकरूपेण लखनऊपरिसरस्य शिक्षाविभागस्याचार्याः प्रो.एम.चन्द्रशेखरमहोदयाः पदमलङ्कृतवन्तः। 1958 तमे महाराष्ट्रे जनिं प्राप्य एते महोदया 1978 तमे तिरुपतिविश्वविद्यालयात् न्यायवैशेषिकविषये शिरोमणिः(बी.ए.)परीक्षायां प्रथमश्रेण्यां स्थानं प्राप्तवन्तः। 1979 तमे राष्ट्रियसंस्कृतसंस्थानात् मनोविज्ञानादिविषये शिक्षाशास्त्री(बी.एड.)परीक्षायां द्वितीयश्रेण्यां स्थानमवाप्य 1981 तमे संस्थानात् एव अद्वैतवेदान्ते आचार्यकक्षा प्रथमश्रेण्या उत्तीर्णवन्तः। 1984 तमे संस्थानतः शिक्षाचार्यकक्षायाम् (एम.एड.) प्रथमस्थानं प्राप्तवन्तः। 1992 तमे संस्थानात् विद्यावारिधिं कृतवन्तः। 1987 तमे एतैः राष्ट्रियसंस्कृतसंस्थाने प्रवक्तारूपेण पदमलङ्कृतम्। विभिन्नेषु परिसरेषु निदेशकपदे कार्यं सम्पाद्य सम्प्रति श्रीरघुनाथकीर्तिपरिसरे निदेशकपदं एतैः सुशोभितम्। पुस्तकेषु शैक्षिकविवेकः, आधुनिकता अभिवृत्तिश्च, तत्त्वचन्द्रिका च प्रसिद्धानि पुस्तकानि सन्ति। एतैः शिक्षासुरभिशिक्षामृतादि नैकासां पत्रिकाणां सम्पादकरूपेण च कर्म सम्पादितम्, प्रधानसम्पादकरूपेण द्वयोः पत्रिकयोः सम्पादनं च कृतम्।

## अष्टमो योगशिविरः परिसरे समायोजितः



सम्पूर्णराष्ट्रे योगदिवसमाधारीकृत्य विभिन्नाः कार्यक्रमाः आयोजिताः। भारतसर्वकारेण योगदिवसस्य दशदिवसीयकार्यक्रमः सर्वत्र परिपालनार्थं सूचना प्रसारिता आसीत्। अतः सर्वासु संस्थासु अयं कार्यक्रमः महतोल्लासेनायोजितः। केन्द्रीयसंस्कृतविश्वविद्यालयस्य सर्वेषु परिसरेषु अपि योगशिविरस्यायोजनं विभिन्नप्रकारेणानुष्ठितः। श्रीरघुनाथ-कीर्तिपरिसरेणायं कार्यक्रमः 11 जूनतः 21 जूनपर्यन्तमेकादशदिवसात्मकः समायोजितः। तत्र प्रथमदिवसे योगाभ्यासस्य कार्यक्रमः छात्रवासे आचरितः। तत्र कार्यक्रमसंयोजकेन गौतमचौधरिणा योगाभ्यासः कारितः, तत्र च डॉ.अनिलकुमारः, डॉ.अरविन्दगौर अपि सह- संयोजकत्वेन आस्ताम्। द्वितीये दिवसेऽपि योगाभ्यास एव सञ्जातः। तृतीये दिवसे योगविषयमधिकृत्य प्रो.विजयपालशास्त्रिणो व्याख्यानमभवत्। तैरुक्तं यत् योगस्यैका विस्तृतपरम्परा



विद्यते गीतायां यस्मिन् विषये निगदितम्। वस्तुतः बाह्यान्तरिकेन्द्रियाणां योग एव योगो विद्यते यथोक्तम् - 'युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु युक्तास्वप्नावबोधस्य योगो भवति दुःखहा।।' अपि च योगश्चित्तवृत्तिनिरोधः इति छात्राणां कृते सम्यक्तयोद्बोधितम्। तृतीये दिवसे योगजागरूकताप्रदक्षिणाकार्यक्रमस्यायोजनं कृतम्, तत्र सर्वे छात्राः प्राध्यापकाश्च निदेशकमहोदयेन प्रो.एम.चक्रवर्तीमहोदयेन सह योगविषयकजन-जागरूकतायै प्रातःकाले उद्घोषेण सह निर्गता। किञ्च गङ्गातीरे गत्वा तत्र सर्वे योगाभ्यासमपि कृतवन्तः। एवमेव चतुर्थदिवसेऽपि जनजागरूकताप्रदक्षिणा-कार्यक्रमस्यायोजनमभवत्। पञ्चमे दिवसे आई.पी.एस.अधिकारिणां डॉ.बी.के. उपाध्यायमहोदयाना-मुद्बोधनं जातम्। भारतमातुः सेवा कथं करणीया? कथं शास्त्राणि रक्षणीयानि? तद्विषये विस्तरेण तैः प्रोक्तम्। छात्राणां कृते संस्कृताध्यनेन आधुनिकक्षेत्रेष्वपि आजीविकाया अवसराणि सन्ति अतः तेषामध्ययनं कथमस्माभिः करणीयमिति ते बोधितवन्तः।







षष्ठे दिवसे दिल्लीविश्वविद्यालयस्य प्रो.प्रदीपकुमारस्य योगस्य वैज्ञानिकताविषये व्याख्यानं जातम्। अस्माकं जीवने कथं योगं विना विभिन्नाः समस्याः समुत्पन्नाः? कथं च तासां निवारणं भविष्यतीति सर्वं विस्तरेण तेन प्रतिपादितम्। सप्तमे अष्टमे च दिवसे राहुलवशिष्ठमहोदयेन छात्राणां कृते योगस्य प्रशिक्षणं प्रदत्तम्। तत्र विभिन्नानाम् आसनानां विभिन्नानां क्रियाणां च विषये सूक्ष्मतया व्यवहारः कारितः। नवमे दशमे च दिवसे छात्राणां योगप्रतियोगिता कारिता प्रथमतया छात्रैः, अनन्तरं छात्राभिः अस्यां प्रतियोगितायां भागः गृहीतः। तदनन्तरं प्राध्यापकानामपि प्रतियोगिता सञ्जाता। अन्तिमे दिवसे विशिष्टकार्यक्रमः समापनस्य समायोजितः, तस्मिन् कार्यक्रमे केन्द्रीयसंस्कृतविश्वविद्यालयस्य यशस्विनः कुलपतयः प्रो.श्रीनिवासवरखेडीमहोदयाः समुपस्थिता आसन्।



अस्मिन् दिने आदौ प्रधानमन्त्रिणः माननीयनरेन्द्रमोदिनः योगदिवसमाधारीकृत्य चलचित्रे भाषणं जातं तदनन्तरं कुलपतिमहोदयैः सह निदेशकमहोदयेन सर्वैः परिसरस्य छात्रैः प्राध्यापकैः कर्मचारिभिश्च योगाभ्यासः कृतः। अस्य योगाभ्यासकार्यक्रमस्य प्रसारणम् आनलाइनमाध्यमेन सर्वेषु परिसरेष्वपि अपि जातम्। एवं सम्पूर्णस्य केन्द्रीयसंस्कृतविश्वविद्यालयस्य कर्मचारिणः कार्यक्रमेऽस्मिन् संयुक्ता अभवन्। योगाभ्यासात्परं कुलपतिमहोदयेन सर्वैः छात्रैः सह संवादो विहितः, तदनन्तरं भवननिर्माणकर्मचारिभिः सह उपवेशनं कृतम्। तदनन्तरं च प्राध्यापकैः सहापि मेलनं तेषां जातम्। एवं केन्द्रीयसंस्कृतविश्वविद्यालयस्य श्रीरघुनाथकीर्तिपरिसरे योगदिवसस्यायं कार्यक्रमः हर्षोल्लासेन समाचरितः। अस्मिन् कार्यक्रमे सर्वेषां प्राध्यापकानां छात्राणां च महत्त्वपूर्णयोगदानमासीत्।









## योगप्रतिभगिन: (पुरुषर्का:)

| क्र.सं. | प्रतिभागीनाम | स्थानम् | कक्षा |
|---|---|---|---|
| 1 | सागर नौटियाल: | प्रथमं | शास्त्रीद्वितीयवर्षम् |
| 2 | त्रिलोकेश आचार्य: | द्वितीयं | आचार्यप्रथमवर्षम् |
| 3 | भाष्कर खङ्करियाल: | तृतीयं | शास्त्रीप्रथमवर्षम् |

## योगप्रतिभागिन: (महिलावर्ग:)

| क्र.सं. | प्रतिभागीनाम | स्थानम् | कक्षा |
|---|---|---|---|
| 1 | माधुरी | प्रथमं | प्राक्शास्त्रीप्रथमवर्षम् |
| 2 | मधु: | द्वितीयं | शास्त्रीप्रथमवर्षम् |
| 3 | श्रुति शर्मा | तृतीयं | शास्त्रीद्वितीयवर्षम् |

## योगप्रतिभागीनाम (पुरुषवर्ग:)

| क्र.सं. | प्रतिभागीनाम | स्थानम् | विभाग: |
|---|---|---|---|
| 1 | डॉ. श्रीओमशर्मा | प्रथमं | व्याकरणम् |
| 2 | डॉ. बीरेन्द्रबर्त्वाल: | द्वितीयं | हिन्दी |
| 3 | डॉ. अनिलकुमार: | तृतीयं | साहित्यम् |

## योग क्वीज प्रतियोगिता (पुरुषवर्ग:)

| क्र.सं. | प्रतिभागीनाम | स्थानम् | कक्षा |
|---|---|---|---|
| 1 | आयुषरतूडी | प्रथमं | शास्त्रीप्रथमवर्षम् |
| 2 | पीयूषतिवारी | द्वितीयं | शास्त्रीप्रथमवर्षम् |
| 3 | अनिलभट्ट: | तृतीयं | आचार्यप्रथमवर्षम् |















## नाट्यमहोत्सवस्यायोजनम्

केन्द्रीयसंस्कृतविश्वविद्यालयेन प्रतिवर्षम् एकस्मिन् परिसरे नाट्यमहोत्सवस्यायेजनं क्रियते। येन छात्राणामभिनयकला विकसिता भवेत्। सर्वे परिसरा निर्दिष्टपरिसरं समागत्य केन्द्रीयसंस्कृतविश्वविद्यालयेन प्रदत्तनाटकस्य अभिनयं प्रस्तुवन्ति। अस्मिन् वर्षे कार्यक्रमोऽयं मार्चमासस्य 22 दिनाङ्कात् 24 दिनाङ्कपर्यन्तं भोपालपरिसरे समायोजितः। अस्मिन् महोत्सवे श्रीरघुनाथकीर्तिपरिसरस्य कृते अमरमङ्गलं नाटकं निर्धारितमासीत्। अस्मिन् नाटके मेवाडभूमेः गौरवगाथा वर्णिता विद्यते। श्रीरघुनाथकीर्तिपरिसरस्य अष्टौ छात्राः अस्य नाटकस्याभिनयार्थं भोपालनगरं गतवन्तः। तत्र च वीररससमन्वितस्यास्य नाटकस्याभिनयं कृतवन्तः। अस्मिन् नाटके संगीतस्य क्षेत्रे सर्वेषु नाटकेषु प्रथमं स्थानं श्रीरघुनाथकीर्तिपरिसरेण प्राप्तम्। अस्य नाटकस्य संयोजकः डॉ. कृपाशङ्करशर्ममहोदया आसन्, मार्गदर्शकरूपेण डॉ.अरविन्दगौरमहोदय आसीत्। अस्मिन् नाटके श्रीमोहितशर्मा प्रथमस्थानम्, सुश्रीमोनिकानौगाईं द्वितीयस्थानम्, श्रीदिगम्बररतूडी तृतीयस्थानं प्राप्तवन्तः। एवं श्रीरघुनाथकीर्तिपरिसरेण अस्मिन् कार्यक्रमे सोत्साहपूर्वकं भागः गृहीतः।

## वार्षिकोत्सवस्य आयोजनम्

श्रीरघुनाथकीर्तिपरिसरस्य स्थापना जूनमासस्य 29 दिनाङ्के 2016 तमे सञ्जाता आसीत्। तत आरभ्य प्रतिवर्षम् अस्य स्थापनादिवसः वार्षिकोत्सवरूपेण मन्यते। अस्मिन् वर्षे चतुर्थोऽयं वार्षिकोत्सवः परिपाल्यते। छात्राः विभिन्नासु प्रतियोगितासु भागं गृहीतवन्तः। प्रतियोगितासु प्रथमद्वितीयतृतीयस्थानेषु विद्यमानानां छात्राणां कृते पुरस्कारवितरणमपि अभवत्। तत्र श्लोकान्त्याक्षरीप्रतियोगितायाः सञ्चालकः डॉ.अनिलकुमारः, एकलप्रतियोगितायाः डॉ.अरविन्दसिंहगौरः, निबन्धप्रतियोगितायाः डॉ.शैलेन्द्रप्रसादउनियालः, भाषणप्रतियोगितायाः डॉ. सच्चिदानन्दस्नेही, संस्कृतगीतप्रतियोगितायाः डॉ.मनीषाआर्या च आसन्। अस्मिन् कार्यक्रमे मुख्यातिथिरूपेण कृष्णकान्तकोटियालः नगरपालिकाध्यक्षः देवप्रयागः, प्रो.एम.चन्द्रशेखरः अध्यक्षरूपेण, डॉ.सच्चिदानन्दस्नेही संयोजकरूपेण चासन्। वैदिकमङ्गलाचरणेन कार्यक्रमस्यारम्भोऽभवत्। परिसरनिदेशकेन मुख्यातिथीनां वस्त्रमाल्यादिप्रदानेन स्वागतं विहितम्। वार्षिकोत्सवः अस्माकं संस्थां प्रति सम्मानं प्रकटयति तथा च तस्या रक्षायाः भावमुद्भावयति इति निदेशकमहोदयेनोक्तम्। तदनन्तरं तैरेव वार्षिकप्रतिवेदनं मपि प्रस्तुतम्। यत्र संस्थायाम् अस्मिन् वर्षे के के कार्यक्रमाः अभवन् का च प्रगतिरस्याः संस्थायाः सञ्जाता? इति सर्वं निगदितमासीत्। कार्यक्रमस्य सञ्चालनं डॉ.शैलेन्द्रप्रसादउनियालमहोदयेन कृतम्। अस्मिन् कार्यक्रमे परिसरस्य सर्वे प्राध्यापकाः समुपस्थिता आसन्।








# साहित्य-खण्डः

## निरुद्धा जाता मे वाणी

डॉ.अनिलकुमारः

एकाकिनी साऽद्यापि पुनः,
यस्या विशाले हृदि
सर्वेषां नूनं निवासः,
कथमवरुद्धस्तस्या मार्गः,
यस्या लब्धं जन्म,
प्राप्ता भगिनी,
यया च कृतः परिणयः,
तस्या दशेयमिति चिन्तयन्
निरुद्धा जाता मे वाणी ।।
परस्परं द्वेषभावं मनसि निधाय,
प्रदर्शयन्ति मन्दं स्मितम्,
चिन्तयन्ति विनाशबुद्धिम्,
वहन्ति पूर्वपापम्,
कोऽस्ति भव्यायेति विचारयन्
निरुद्धा जाता मे वाणी ।।
प्रकृत्या सह स्वार्थक्रीडाम्,
क्रीडन्ति, न तु विचारयन्ति
तस्याः प्रतिफलम्,
उत्तराखण्डसदृशम्,
किञ्च नेपालदेशम्।
कीदृशमिदं विज्ञानम्,
वस्तुतस्त्वज्ञानम्,
यन्न जानन्ति जनाः,
किञ्चाविष्कुर्वन्तीति बोधयन्
निरुद्धा जाता मे वाणी ।।

## निद्रायां जागर्तिः

डॉ.अनिलकुमारः

पश्यत्यात्मानमेकस्यां निद्रायाम्,
यत्र नास्ति कोऽपि विकारः,
केवलं श्रूयते तस्य गरगरस्वरः,
परञ्च नावगम्यते यस्यार्थः।
किमनुभवति? सो यदा,
रुद्धो जातः तस्य श्वासः,
निद्रा भङ्गा, स्वप्नोऽपि भङ्गः
परञ्च नैव याति निद्रा।
कीदृशोऽयं सञ्जातो मोहः,
यत्र सुप्तो न सुप्तस्तथापि सुप्तः,
अहं नात्र तत्रापश्यन्नपि,
यः पश्यति सोऽहं, न तत्त्वमसि।
कीदृशीयमवस्थास्त्यत्र,
नैव यथार्थः,न भूतो न च भावि।
निद्रायां जागर्तिरिव जागर्तिः
यथात्र भवति क्षेत्रस्यास्य विकारः।
नैव दोषोऽत्र कोऽपि दोषः,
दोषस्त्वस्ति अस्य मनसो विकारः।
किं सत्यं जगतीह तथापि,
भुङ्क्ते भोगान् रुधिरप्रदिग्धान्।
कथं न जानाति तत्,
यद्गत्वा न निवर्तन्ते यत्सत्यम्।
वेत्ति निर्विकल्पसमाधावपि,
भवति तस्यैव प्रतिष्ठा,
तदा अन्धकारोऽपि सत्यम्।
परञ्च प्रकृतिं यान्ति भूतानि,
तदा तत्रापि नैवासत्यम्।
न सत्यं ब्रह्मसत्यं जगन्मिथ्या,
न चापरं यद्विपरितम्।
सत्यमेवोभयात्मकमत्र मनः,
यज्जगति, यच्चान्यत्र।
विमोहयतीव पश्यत्यात्मानम्,
कुत्र निद्रा कुत्र जागर्तिः?

## मूकस्य वाणी

डॉ.अनिलकुमार:

न भवति सर्वेषामभिव्यक्तिपूर्णा वाणी,
तथापि जनयति कौतुहलं हृदि।
प्रेरयति श्रोतुं कथमपि शब्दान्
तदापि श्रेष्ठा तस्य मूकस्य वाणी ।।1।।
गूढान् भावान् प्रकाशयति सर्वान्,
नैव किमपि वक्ति यः सदा नः।
मन्दं मन्दं स्मितं तस्य नूनम्
ईश्वरस्य कापि क्रीडा नवा च ।।2।।
सूर्यचन्द्रौ यस्य नयने विशाले
ब्रह्माण्डोदरोऽखिलचराचरो वा
नैव पारं याति गुणानां गुणस्य
तव हे विशालबुद्धे प्रभो मे ।।3।।
निराकारेऽपि साकारस्त्वम्
जनानां हृदि तवैव प्रकाशः।
पश्यन्ति ध्यानावस्थितास्त्वामेव
निशायां जागरणे दिवसे च सुप्तौ।।4।।
विभिन्नरूपेषु क्रिया यथा च
तथैव कर्माणि तवैव सत्ता।
अनन्तकाले हे कालकाल!
भूते भविष्ये प्रवर्तमाने ।।5।।

## सम्भाषण - चतु:श्लोकी।

डॉ शैलेन्द्रप्रसाद उनियाल:

सम्भाषणं समशनं समलङ्कृतिश्च,
स्वाभाविकी भवतु कर्मविधानयुक्ता।
मुक्ता दुराग्रहतिमिङ्गिलशीलतश्च ,
हस्तद्ग्वन्नर इहावतु नॄंश्च नारीः।।१।।
तस्माद्वयं द्वयमतीव मतीश्च साधितुं ,
लोकं विशोककरणाय कटिप्प्रबद्धाः।
तत्संस्कृतेन मनसा वाचसा क्रियाभिः,
संसेत्स्यतीह सुहृद:परिमार्ज्जयन्तु।।२।।
साङ्गैरुपाङ्गयुतदर्शनशास्त्रभेदैः
वेदैःपुराणनिखिलैस्सह बोधवाक्यैः।
यद्यस्य वै रुचिकरं सुकरं सुगम्यं
तत्तज्जनो भवतु भारतभारतेऽस्मिन्।।३।।
सम्भाषणं भवतु संस्कृतवाग्विनोदैः,
मोदैश्च वेदवचनैरपि कर्मकालः।
बालाः स्वराष्ट्रमिह विश्वगुरोस्सुमानं
लप्सीष्ट नश्श्रमयुतेन सुनिश्चितेन।।४।।

## वाग्देवता

श्री जनार्दन सुवेदी

समुपासकं न कुरुते विफलं
न तवास्ति तत्र सफलं करणम्।
अनुपासकं हि कुरु मां सफलं
मयि भारती भगवती दयताम्।।१।।
विद्या सा परमोपकारनिरता स्तुत्या सदा सूरिभिः
सत्काव्यादि विवर्तभूतमखिलं यस्या हि देव्याः स्फुटम्।
हार्दं भक्तजनस्य वेत्ति नितरां हृन्मध्यवर्तिन्यसौ
तां वाचं समुपास्महे श्रितजनाज्ञानान्धकारापहाम्।।२।।
ब्रह्माद्यैर्निखिलैस्स्तुता भगवती विद्वद्रसज्ञास्थिता
मूकं वाचयति भ्रमङ्गलयति ज्ञानामृतं सिञ्चति।
यां स्तुत्वा ऋषयश्श्रुतिस्सुरगणास्श्रान्ता बभूवुः परां
तां वाचं समुपास्महे श्रितजनाज्ञानान्धकारापहाम्।।३।।
लोकेऽस्मिन् सुखकारिणी बुधनुता जाड्यान्धसंहारिणी
छात्राभीष्टकरी सदा शुभकरी मोहस्य विध्वंसिका।
ज्ञानैश्वर्यसमस्तवाञ्छितकरी वाणीति या संस्तुता
तां वाचं समुपास्महे श्रितजनाज्ञानान्धकारापहाम्।।४।।
हंसासनां सुमधुरां शुभपुस्तहस्तां
संध्याय वै मुनिजना अपवर्गलब्धिम् ।
कुर्वन्ति, मातरचलां तव मूर्तिमेवम्
मुग्धोऽप्यहं शरणदां सततं प्रपद्ये।।५।।

# शैक्षणिकगतिविधयः

## प्रो.एम.चन्द्रशेखरः (परिसरनिदेशकः)

- 14.06.2022 निदेशकपदमलङ्कृतम्।
- 15.06.2022 योगविषयकप्रदक्षिणायां भागग्रहणम्
- 15.06.2022 अध्यापकैः छात्रैश्च सहोपवेशनम्।
- 16.06.2022 सी.पी.डब्ल्यू.डी. इत्यनेन सहोपवेशनम्।
- 19.06.2022 योगप्रशिक्षणे छात्रेभ्यः उद्बोधनम्।
- 21.06.2022 कुलपतिना सहोपवेशनम्, योगाभ्यासश्च।
- 22.06.2022 परिसरे वृक्षारोपणकार्यक्रमे भागग्रहणम्।
- 23.06.2022 परिसरभवनस्य निरीक्षणम्।

## डॉ.अनिलकुमारः

- 9.01.2022 वैश्विकसंस्कृतमञ्च-असमप्रान्तेन एवं सिल्चरमहाविद्यालयस्य संस्कृतविभागेन समायोजितायां सङ्गोष्ठ्या- मुपस्थितिः ।
- 6.01.2022 तः 12.01.2022 पर्यन्तं श्रीशङ्करलालसुन्दरीबाईशासुनजैनमहिलामहाविद्यालये अन्तर्जालीयायां कार्यशालायाम् उपस्थितिः।
- 20.01.2022 वैश्विकसंस्कृतमञ्चमहाराष्ट्रप्रान्त एवं स्व.मदनगोपाल मुन्धडा कला, वाणिज्य इत्यनयोः संयुक्ततत्त्वावधाने सङ्गोष्ठ्यामुपस्थितिः।
- 14.02.2022 तः 26.03.2022 पर्यन्तं जवाहरलालनेहरुविश्वविद्यालय-नवदेहलीद्वारा समायोजिते "रिफ्रेशरकोर्स" कार्यक्रमे उपस्थितिः।
- 5.03.2022 श्रीरघुनाथकीर्तिपरिसरस्य ज्योतिषविभागेन समायोजितायां सङ्गोष्ठ्यां पत्रवाचनम्
- 10.03.2022 तः 12.03.2022 पर्यन्तम् अखिलभारतीयशास्त्रीयस्पर्धायाः संयोजकरूपेण उपस्थितिः।
- 11.03.2022 अखिलभारतीयराज्यशास्त्रीयस्पर्धायां निर्णायककरूपेण उपस्थितिः।
- 22.03.2022 तः 28.03.2022 पर्यन्तं वैश्विकसंस्कृतमंचपश्चिमबंगप्रान्तद्वारा समायोजितायां कार्यशालायामुपस्थितिः।
- 01.06.2022 तः 18.06.2022 पर्यन्तं केन्द्रीयसंस्कृतविश्वविद्यालयस्य श्रीरघुनाथकीर्तिपरिसरे प्राक्शास्त्रीकक्षायाः परीक्षासंयोजनम्।
- 11.06.2022 तः21.06.2022 पर्यन्तं केन्द्रीयसंस्कृतविश्वविद्यालयस्य श्रीरघुनाथकीर्तिपरिसरे समायोजिते योगशिविरे उपस्थितिः।
- 21.06.2022 तः 24.06.2022 पर्यन्तं गोकुलजनकल्याणसमितिद्वारा समायोजितायां कार्यशालायामुपस्थितिः।
- 20.06.2022 केन्द्रीयसंस्कृतविश्वविद्यालयस्य श्रीरघुनाथकीर्तिपरिसरे प्राकशास्त्रीप्रवेशपरीक्षायाः संयोजनम्।

### डॉ.शैलेन्द्रप्रसादउनियालः

- 21.12.2021 उत्तराखण्डसंस्कृत-अकादम्याः गीताजयन्तीमासमहोत्सवे विषयप्रवर्तनं कार्यक्रमसंयोजनं च कृतम्।
- 13.11.2021 केन्द्रीयसंस्कृतविश्वविद्यालयस्य छात्रावासे संस्कृतसंभाषणवर्गस्य लेखनानुवादवर्गस्य च उद्घाटनसत्रे संयोजकत्वं मुख्यातिथित्वं च सम्पूर्त्तिसत्रे मुख्यवक्तृत्वञ्च विहितम्।
- 11.11.2021तः20.11.2021 पर्यन्तं नव्यन्यायभाषाप्रदीपग्रन्थमवलम्ब्य समायोजितायां कार्यशालायां अन्तर्जालीयप्रविधिसमन्वयकत्वेन प्रतिभागं कृतम्।
- 10.12.2021तः 12.12.2021 पर्यन्तं वेव्सकेन्द्रीयसंस्कृतविश्वविद्यालययोः संयुक्ततत्त्वावधाने अन्तर्जालीयान्ता- राष्ट्रियवैदिकसम्मेलने प्रतिभागं विहितम्।
- 24.12.2021 जयतु संस्कृतं जयतु भारतं रेडियो ग्रामोदयद्वारा सञ्चालिते परिचर्चाकार्यक्रमे मुख्यातिथित्वेन भागं गृहीतम्।
- 27.12.2021 तः 22.01.2021 पर्यन्तं विश्वविद्यालयानुदानमाध्यमेन जवाहरलालनेहरुविश्वविद्यालये नवदेहल्यां ऑनलाईनमाध्यमेन एफ. आई. पी. कार्यक्रमे सफलाभ्यर्थित्वेन भागः गृहीतः।
- 26.01.2022 ध्वजारोहणानन्तरं राष्ट्रीयैकताविकासार्थं देशभक्तानां संस्मरणार्थं सभायाः सञ्चालनं विहितम्।
- 27.01.2022 तमे 75 कोटिसूर्यनमस्कारकार्यक्रमे भागः गृहीतः।
- 05.02.2022 वसन्तपञ्चमीमहोत्सवे आचार्यत्वे वाग्देव्याः होमपूर्वकं वरिवस्या सम्पन्ना।
- 08-28.03.2022 केन्द्रीयसंस्कृतविश्वविद्यालयस्य वित्तीयसहयोगेन पौरोहित्यप्रशिक्षणवर्गसमन्वयकत्वेन संचालितः, तत्रैव 10,12,21 दिनाङ्केषु चत्वारि व्याख्यानानि प्रदत्तानि।
- 13-14.03.2022उत्तराखण्डराज्यस्तरीयशास्त्रीयस्पर्धायां वेदभाष्यभाषणे धातुकण्ठपाठे च निर्णायकत्वं निर्व्यूढम्।
- 13-14.03.2022 दशदिवसीयनाट्यप्रशिक्षणवर्गे सहसंयोजकत्वेन प्रशिक्षकत्वेन छात्रेभ्यः प्रशिक्षणं प्रदत्तम्।

### डॉ.अमन्दमिश्रः

- 12.11.2021 नव्यन्यायभाषाप्रदीपग्रन्थमाधारीकृत्य आयोजितायां कार्यशालायां सञ्चालनं कृतम् ।
- 13.11.2021 दिनाङ्के संस्कृतसम्भाषणवर्गस्य लेखनानुवादवर्गस्य उद्घाटनसत्रे च सारस्वतातिथित्वं विहितम्।
- 22-23.12.2021 उत्तराखण्डसंस्कृतशिक्षापरिषदि पाठ्यक्रमनिर्माणार्थं विषयविशेषज्ञत्वेन कार्यं विहितम्।
- 25-26.12.2021 संस्कृतभारत्याः प्रान्तीयसम्मेलने भागं गृहीतवान्।
- 26.01.2022 ध्वजारोहणानन्तरं राष्ट्रीयैकता विकासार्थं तथा च देशभक्तानां संस्मरणसभायां भागं गृहीतम् ।
- 27.01.2022 कोटिसूर्यनमस्कारकार्यक्रमे भागः गृहीतः।
- 05.02.2022 वसन्तपञ्चमीमहोत्सवे उपाचार्यत्वेन वाग्देव्याः होमपूर्वकं वरिवस्या सम्पन्ना।
- 08.03.2022 तः 28.03.2022 पौरोहित्यप्रशिक्षणवर्गे सहसमन्वयकत्वेन संचालितः, तत्रैव 17,18,19 दिनाङ्के त्रीणि व्याख्यानानि प्रदत्तानि।
- 13-14.03.2022 राज्यस्तरीयशास्त्रीयस्पर्धायां अमरकोषकण्ठपाठे संयोजकत्वं निर्व्यूढम्।

## श्री जनार्दन सुवेदी

- 10.03.2011 तः 11.03.2022 पर्यन्तं परिसरे समायोजितायां राज्यस्तरीयप्रतियोगितायां निर्णायकत्वेनोपस्थितिः।
- 10.03.2011 तः 11.03.2022 पर्यन्तं परिसरे समायोजितायां राज्यस्तरीयप्रतियोगितायां संयोजकत्वेनोपस्थितिः।
- 07.09.2021तः 13.09.21 पर्यन्तं श्रीरघुनाथकीर्तिपरिसरे समायोजितायां तर्कामृतं विषयक- सप्तदिवसीय अन्तर्जालीय- अन्ताराष्ट्रियमूलपाठाध्ययनकार्यशालायाम् अध्यापनं कृतम्।
- 11.11.21 तः 20.11.21 पर्यन्तं श्रीरघुनाथकीर्तिपरिसरे समायोजितायां "नव्यन्यायभाषाप्रदीप" विषयक- दशदिवसीय-अन्तर्जालीय- अन्तारास्ट्रियमूलपाठाध्ययनकार्यशालायां मूलपाठाध्यापनं विहितम्।

# प्रतिस्पन्दः




अमन्दमानन्दमातनोतीयं रघुनाथप्रसादात् रघुनाथवार्तावलीपत्रिका रघुनाथकीर्तिपरिसरस्य। अन्यूनातिरिक्तत्वमनोहारिणीस्थितियुता हृदयाह्लादकारिणी सर्वसूचनाप्रदात्री चेयमालक्ष्यते। न विद्यते किमपि तत्त्वमीदृशं यन्नैवावलोक्यतेऽत्र। पद्यकाव्यमयी पूर्ववाक् सम्पादकीयं वा स्यात्, छात्राणां प्रतियोगितापुरस्कारादिसूचना वा स्यात् सर्वमत्र सरलभावेन रसान्विता च दृश्यते। सम्मेलनस्य विदुषां वक्तव्यस्य च दृश्यते निरन्तरमिह विस्तारः। काव्यकलालापस्य यथा स्थितिरत्र परिपूर्णा प्रतीयते तथैव आचार्याणां गतिविधीनां वर्णनमपि। पूर्वतो नूतना सुरम्या भावगम्या च सततमालक्ष्यते पत्रिकेयम्।

अतो रघुनन्दनं प्रार्थनेयं विद्यते यत् रात्रिदिवं तस्यैव कीर्तिरनया प्रसरेदिति।




**श्रीनवीनडोबरियालः**

(सहायकपुस्तकालयाध्यक्षः)

केन्द्रीयसंस्कृतविश्वविद्यालयः,

श्रीरघुनाथकीर्तिपरिसरः देवप्रयागः

